णीले-अष्टाशीतौ महाग्रहे पञ्चविंशतितम । ठाणा० ७९ । नीलवत्कूट-नीलवद्वक्षस्काराधिपकूटम् । जं० प्र० ३७७ ।
णीलोभासे-अष्टशीतौ महाग्रहे पञ्चविंशतितम । ठाणा० ७९ ।
णीवातय-वनस्पतिविशेष । भग० ८०३ ।
णीवट्टमाणो-निवर्तमान । उत्त० १३९ ।
णीवारे-निवार -सूकरादीनां पशूनां वध्यस्थानप्रवेशनभूतो भक्ष्यविशेष । सूत्र० २५८ । निवार -भक्ष्यविशेष । सूत्र० ११४ ।
णीसक-निसङ्क-अविद्यमानसन्देहम् । भग० ५४ ।
णीसट्ठ-निसृष्ट-प्रकामम् । बृ० तृ० १२१ आ । निसृष्ट -नारकैर्विमुक्तं आत्यन्तिकौ वा । प्रश्न० २० । निष्प्रसरम् । उप० मा० ३५९ ।
णीसन्द-निष्पन्द । प्रज्ञा० ६ ।
णीसरइ-नि सरति । दश० ६१ ।
णीसवमाणो-निश्रवयन्-यस्मात्सामायिक प्रतिपद्यते तदावरण कर्मनिर्जयन् । आव० ३४० ।
णीसहो-निस्सह । उत्त० १९३ ।
णीहट्टु-नि सार्य । आचा० ४०१ ।
णीहारि-निर्हारि-प्रबलो गन्धप्रसर व्यापि वा । आव० २३१ ।
णीहारिम-निहारिमा-दूरदेशगामिनी । औप० ८ । यद्वसतेरेकदेशे विधीयते ततस्त शरीरस्य निर्हरणात्-निस्सारणान्निर्हारिमम् । ठाणा० ९४ । यत्पादपोपगमनमाश्रयस्यैकदेशे विधीयते तन्निर्हारिमम् । भग० ६२५ ।
णीहारी-नीहारी-अनिक्रामी । औप० ७८ ।
णीहि-निर्गच्छ । आव० ३९४ ।
णीहू-अनन्तकायभेद । भग० ३००, ८०४ ।
णीहूय-कन्दविशेष । उत्त० ६९१ ।
णीहूया-निर्व्यापारा । व्य० प्र० २५४ ।
णु-वितर्के । विशे० ३० ।
णुउम-नुद्य-नोदयं । व्य० द्वि० १७१ ब ।
णुयप्पो-अनुपप्रस्रवावलित । बृ० द्वि० २३७ आ ।
णुयोहेज्जा-उपबृहयेत्-परिणामवृद्धि कुर्यात् । दश० ४८ ।
णूण-नूनं एवमर्थे । भग० १४ । नून-उपमानावधारणतर्कप्रश्नहेतुषु । प्रज्ञा० २४६ । निश्चितम् । ज्ञाता० ६६ ।
णूम-दविय, भित । नि० चू० द्वि० ७० आ । माया । सूत्र० ३४ । गहन, मायेति । सूत्र० ५२ । प्रच्छन्न गिरिगुहादिकम् । सूत्र० ८९, ३०७ । न्यवमम् । सम० ७१ । सूत्र० ३०७ ।
णूमए-आच्छादयेत् । बृ० प्र० १७७ ब ।
णूमगिह-भूमिघर । नि० चू० द्वि० ६१ आ ।
णूमियं-गोपितम् । उत्त० ११५ ।
णूमेंति-नूमन्ति-गोपयन्ति । ज्ञाता० २२७ ।
णूमेस्सति-स्थापयिष्यति । नि० चू० द्वि० १५४ अ ।
णेंति-निर्गच्छन्ति । आव० ६३२ ।
णे-आत्मनिर्देश । नि० चू० प्र० ३३० आ । अस्माकम् । बृ० द्वि० ८८ आ । नो-अस्माकम् । विशे० ९८४ । सूत्र० ११३ । न । भग० १०० ।
णेउणिअ-नैपुण्य-आलेख्यादिकला लक्षणम् । दश० २४६ ।
णेउणियवत्थु-निपुण वस्तु-अनुप्रवादपूर्वे आलापकविशेष । उत्त० १६३ ।
णेउरं-नुपुर-पादभूषणम् । आव० ३४६ ।
णेउरपडिया-नुपुरपण्डिता । उत्त० ४१६ ।
णेउरा-द्वीन्द्रियजन्तुविशेष । प्रज्ञा० ४१ ।
णेक्कंतितो-व्यतिक्रम । नि० चू० प्र० २०२ ब ।
णेक्कारो-जुगुप्सितो, कोलिगजातिभेदो णेक्कारो । नि० चू० द्वि० ४३ आ ।
णेगम-वणियवग्गो जत्थ वसति त णेगम । नि० चू० द्वि० ७० आ । निगमेषु वा भवो नैगम, निगमा -पदार्थपरिच्छेदा । आव० २८१ । न एक, नैक-प्रभूतानि, नैकैर्मानैः -महासत्तासामान्यविशेषज्ञानैर्मिमीते मिनोतीति वा नैकम । आव० २८३ । नैकेन-सामान्यविशेषग्राहकत्वात् तस्यानेकन ज्ञानेन ऐमनोति-परिच्छिनत्तीति नैकम, अथवा निगमा -निश्चितार्थबोधास्तेषु कुशलो भवो वा नैगम अथवा नैको गम -अर्थमार्गो यस्य स प्राकृतत्वेन णेगम । ठाणा० १५२ । नैगम । प्रज्ञा० २८४ । नयविशेष । प्रज्ञा० ३२७ ।
णेगामोसा-न एके आमर्शा अनेकामर्शा, अनेकस्पर्शा । औप० ११० ।

णेड्डं–नीडम् । आव० १८९ । गृहम् । आव० ३९५ ।
णेति–उत्पादयति, करोति । नि० चू० प्र० २०५ आ ।
णेतियंति– । नि० चू० प्र० ३४७ आ ।
णेत्तं–नेत्रम् । सूत्र० ३१२ ।
णेदूर–म्लेच्छविशेषः । प्रज्ञा० ५५ ।
णेमा–भूमेरूर्ध्वं निष्क्रामन्त. प्रदेशाः । ज० प्र० ४२ णेमा नाम भूमिभागादूर्ध्वं निष्क्रामन्तः प्रदेशाः । ज० प्र० २३ ।
णेमि–बाह्यपरिधि । ज० प्र० ३७ । नेमि–बाह्यपरिधिः । जीवा० १६२ ।
णेमिपासेसु–नेमिपार्श्वेषु । ज० प्र० २०९ ।
णेमी–नेमि –कृतिकर्मदृष्टान्ते भगवान् । आव० ५१५ । नेमिः–धारा । ज० प्र० २०४ ।
णेम्मं–निभ–सदृशम् । प्रश्न० १३४ । विज्जादिएहिं दक्खादी णमिज्जंतीति णेम्मं वट्ट तिमरा विज्जतस्स अग्गाणि णमिज्जति । नि० चू० द्वि० ७१ अ ।
णेयगहणत्तणं–ज्ञायते इति ज्ञेय–धर्मास्तिकायादि तद्‌ग्रहणत्व गहणत्तं ज्ञेयगहनत्वम् । आव० ५९७ ।
णेयव्वं–नेतव्य–संवेदनविषयता प्रापणीय प्रापयितव्यम् । उत्त० ८ । नेतव्य–स्मृतिपथ प्रापणीय । ज० प्र० २७ ।
णेयाउय–न्यायेन चरति–प्रवर्त्तते इति नैयायिक –न्यायोपपन्न. । उत्त० १८५ । निश्चित आयो–लाभो न्याय –मुक्तिरित्यर्थ. स प्रयोजनमस्येति नैयायिक. । उत्त० २१३ ।
णेवत्थं–नेपथ्य–देशनेपथ्य–स्त्रीपुरुषाणामाभूषणमल्लग्रीविचारः । देशकथायाश्चतुर्थो भेद. । आव० ५८१ ।
णेवत्थकहा–स्त्रीणामेव अन्यतमाया कच्छाबन्धादिनेपथ्यस्य यत्प्रशसादि नेपथ्यकथा । ठाणा० २०९ ।
णेवालं–नेपाल–देशविशेषः । उत्त० १०६ ।
णेव्वे– । नि० चू० प्र० २३२ आ ।
णेसज्जिते–नैषधिक.–समपदपुतादिनिषद्योपवेशी । ठाणा० ३९७ ।
णेसरियएसु–गाणिमादिय पोतिएसु । नि० चू० प्र० १२७ आ ।
णेसप्प–निधी नैसर्पनामनि । ज० प्र० २५८ । नैसर्पः–नवनिधी प्रथम । ठाणा० ४४८ ।
णेहावगाढ–स्नेहावगाढं–स्नेहव्याप्तम् । ज्ञाता० १९६ ।
णेहिं–तैः–एतैः । उत्त० ३५६ । तैः । आव० ११६ ।
णेहोवरते– । नि० चू० प्र० १६७ आ ।
णोइंदियओ–मणो । नि० चू० द्वि० ८५ आ ।
णोथलेण– । नि० चू० द्वि० ७९ अ ।
णोमालिआगुम्मा–नवमालिकागुल्माः । जं० प्र० ९८ ।
णोमालिय–गुल्मविशेषः । प्रज्ञा० ३२ ।
णोल्लावेहिति– । भग० ६८६ ।
णोल्लिय–नोदिता–स्वदेशगमनवैमुख्येन यमपुरीगमनाभिमुखीकृता । ज्ञाता० १६८ ।
णोसद्दो–नोशब्दः, एकदेशवचनः । विशे० ९२० ।
णोसुअ–नोश्रुत प्रत्याख्यानम् । आव० ४७९ ।
ण्हं–निपात. पूरणार्थो वर्तते । आव० १६७ । वाक्यालङ्कारे अवधारणे वा । सूत्र० ४१० । प्रश्न० २० ।
ण्हयणं–स्नपनं–सौभाग्यपुत्राद्यर्थं वध्वादेर्मज्जनम् । प्रश्न० ३९ ।
ण्हाण–स्नानम् । आव० ४१, ८३१ । रथयात्रा स्नानं वा । चू० द्वि० १८७ अ । अर्हत्प्रतिमास्नपनम् । चू० चू० ६१ आ ।
ण्हाणगोल्लो–स्नानीयार्द्रः । उत्त० २१९ ।
ण्हाणपीढं–स्नानपीठम् । आव० ३५६ । ओवारा, धामत्त । नि० चू० द्वि० ८३ आ । स्नानपीठ–स्नानयोग्य आसनम् । ज० प्र० १८६ ।
ण्हाणमल्लिआ–स्नानयोग्या मल्लिकाविशेषः । ज० प्र० ३५ ।
ण्हाणाई–स्नानादि । ओघ० १५१ ।
ण्हाणि–स्नापय । पिण्ड० १२४ ।
ण्हाणिओ–स्नपित । आव० २५८ ।
ण्हाणोदयदाइ–स्नानोदकदायिका । ज्ञाता० ११७ ।
ण्हायंते– । नि० चू० द्वि० ७७ आ ।
ण्हारु–स्नायव शरीरान्तर्वर्ति । ज्ञाता० २२२ । भग० ४६६ । स्नायुनि । सम० १५० । स्नायु–देहनिरा । जीवा० २४ ।
ण्हारुणि–स्नायु । प्रश्न० ८ । स्नायव.–शरीरान्तर्वर्ति । ज० प्र० २०१ ।

ण्हारु— । भग० ७२६ ।
ण्हाविई—नापिती । आव० ३६६ ।
ण्हाविओ—नापित-क्षौरकार. । आव० ४२६ ।
ण्हाविता—कम्मजुंगिताविसेसो । नि० चू० द्वि० ४३ आ ।
ण्हाविय—नापित— । आव० २२४ । नापित-मुण्डन-कार । दश० १०५ । नि० चू० प्र० ६ आ ।
ण्हावियपसेवओ— । उपा०
ण्हावियसालिग—नापितशाला । आव० ६६० ।
ण्हुया—स्नुया-वधू । दश० ६७ ।
ण्हे—अनयो । उत्त० ३६४ ।
ण्होरगं—निहोरकम् । बृ० तृ० १२ अ ।

त

त—तावत् । प्रज्ञा० ७ । तदा । आव० ३५८ ।
तंगध—तद्गन्ध ताद्दग्गन्धवत् । ओघ० २२३ ।
तजहा—तद्यथा-वक्ष्यमाणभेदकथनप्रकाशनार्थं । प्रज्ञा० ७ । तद्यथा-प्रतिज्ञातार्थोदाहरणम् । आचा० १३ । तद्यथा । सम० १५० । तद्यथा-उपप्रदर्शनार्थं । आचा० १३० ।
तंडवेति—ताण्डवयति ताण्डवरूप नृत्य करोति । जीवा० २४७ ।
तंदुल-यूपविशेष । सूर्य० २६३ ।
तंदुलीयक—हरितविशेष । प्रज्ञा० ३१ ।
तंत—तन्यतेऽनेनास्मादस्मिन्निति वा अर्थ इति तन्त्रम् । आव० ८६ । तन्त्र—तुरीवेमादि । भग० २५४ । तान्त—श्रमेण खेदवान् । ज्ञाता० १३६ । तान्त—तर-काण्डकाङ्क्षावाद् । ज्ञाता० २२७ । तान्ता—मनःखेदेन । विपा० ४१ । 'तनु विस्तारे,' तन्यते-विस्तार्यते यद् यस्मादनेन, अस्मात् अस्मिन् वाऽर्थ इति तन्त्रम्, तन्यते विशिष्टरचनया तदेव विस्तार्यत इति तन्त्रम्, सूत्रस्य द्वितीयो पर्याय । विशे० ५६१ ।
तंतमस्सति—आक्रन्दति । दश० ११ ।
तंतय—तन्त्र—वेमविलेखन्याञ्छनिकादि, तस्माज्जात तन्त्रज, उभयत्र वस्त्र कम्बलो वा । उत्त० १२२ ।
तंतवा—चतुरिन्द्रियजन्तुविशेष । जीवा० ३२ । प्रज्ञा० ४२ ।
तंतागार— । नि० चू० प्र० १०४ आ ।
तंतिचरत्ता— । नि चू० द्वि० ४३ आ ।
तंतिसम—नट्टभेओ । नि० चू० तृ० १ अ । तन्त्रीसम० वीणादितन्त्रीशब्देन तुल्य मिलित च । ठाणा० ३६४ ।
तंती—तन्त्री वीणा । ज० प्र० ६१ । सूर्य० २६७ । प्रज्ञा० ८६ । जीवा० २१७ । तन्त्री—वीणाविशेष । प्रश्न० १५६ ।
तंतु—तन्यते भवोऽनेनेति तन्तु—भवतृष्णा । उत्त० ४०५ ।
तंतुअ—तन्तुकम् । आव० ३५५ ।
तंतुगयं—तुरिवेमादेरुत्तीर्णमात्रम् । भग० ३७६ ।
तंतुवाए—तन्तुवाय । अनु० १४६ ।
तंतुवाय—पटकारक । प्रश्न० ३० । तन्तुवाय—शाटिका-कार । आव० ४२१ ।
तंतुवायसाला—कुविन्दशाला । भग० ६६३ ।
तंतुवाया—तन्तुवाया—कुविन्दा । प्रज्ञा० ५६ ।
तंतू—सूत्राट्टिका । बृ० तृ० ६ आ ।
तंदुल—तन्दुल—औषधि । आव० १३१ । तन्दुला—निस्तव-चितकणा । ज० प्र० १०४ ।
तंदुलकणिया—तन्दुलकणिका । आव० ८५५ ।
तंदुलपलम्बं—मुग्नशाल्यादितन्दुलानिति । आचा० ३५७ ।
तंदुलमच्छो—तन्दुलमत्स्य मत्स्यविशेष । जीवा० ३६ । जलचरविशेष । जीवा० १२६ । प्रज्ञा० ४४ ।
तंदुलमत्स्य—निरपेक्षितायां दृष्टान्त । विशे० ७४८ ।
तंदुलीयकं—हरितभेद । आचा० ५७ । हरितविशेष । जीवा० २६ ।
तंदुलेज्जग—वनस्पतिविशेष । भग० ८०२ ।
तंदुलेज्जगतणे—हरितविशेष । प्रज्ञा० ३३ ।
तंदुलेयक—हरितविशेष । उत्त० ६६२ ।
तंदुलोदय—तन्दुलोदकम् । आव० ६२० ।
तंब—ताम्र—शुभ्र (शुल्व) । प्रश्न० १५२ । ताम्र—पृथिवीभेद । आचा० २६ । ताम्रा—रक्ता । ज० प्र० ११० । ताम्रम् । प्रज्ञा० २७ ।
तंबकरोडय—ताम्रकरोटकम् । प्रज्ञा० ३६० ।
तंबगाइ—चतुरिन्द्रियजीवभेद । उत्त० ६९६ ।
तंबयागर— । भग० १६६ ।

तंबागर–ताम्राकर–यस्मिन्निरन्तर महामूषास्वयोदल प्रक्षिप्य ताम्रमुत्पाद्यते स । जीवा० १२३ ।
तंबायं–ताम्रार्क ग्राम । आव० २०७ ।
तंबिता–ताम्रमया । नि० चू० द्वि० ४३ आ ।
तंबिया–ताम्रा । आव० ३२६ ।
तंबे–ताम्रम् । प्रज्ञा० २६० ।
तंबोलिआ–नाटकाया नवमभेद । ज० प्र० १६३ ।
तंबोली–ताम्बूली–नागवल्ली । ज०प्र० ४६ । जीवा० २०० ।
तंसवल– । नि० चू० प्र० १२५ आ ।
तंससण्ठाणपरिणया–त्र्यस्रसंस्थानपरिणता । प्रज्ञा० ११ ।
तंसे–संस्थानविशेष । भग० ८५८ । त्र्यस्र संस्थानविशेष । प्रज्ञा० २४२ ।
तअ–तत –विस्तीर्ण विस्तृतनामक । ज० प्र० २१६ ।
तइओ–तृतीय । बृ० तृ० २२५ अ ।
तइयकसाया–तृतीयकषाया –अप्रत्याख्यानावरण । आव० ७८ ।
तइया–तज्जातरवच । ज्ञाता० ११६ ।
तउअ–पृथिवीभेद । आचा० २६ ।
तउय–त्रपुक–वङ्गम् । प्रश्न० १२२ । त्रपु । प्रज्ञा० २७ ।
तउयागरा– । भग० १६६ ।
तउस–त्रपुष । दश० ६१ । त्रपुषम् । प्रज्ञा० ३७ ।
तउणमिंजगा–त्रीन्द्रियजन्तुविशेष । उत्त० ६९५ ।
तउसमिंजिया–त्रपुषमिञ्जिका त्रीन्द्रियजन्तुविशेष । जीवा० ३२ ।
तउसी–वल्लीविशेष । प्रज्ञा० ३२ । वनस्पतिविशेष । भग० ८०३ ।
तओ–तत । उत्त० ८६ । तदनन्तर तको वा प्राणी । उत्त० १८२ ।
तओतिमिंजिया–त्रीन्द्रियजन्तुविशेष । प्रज्ञा० ४२ ।
तकारयकारदकारयकारनकारप्रविभक्ति–नामा अष्टादशो नाट्यविधि । जीवा० २४७ ।
तकन–तरमरलो । नि० चू० द्वि० २१ आ ।
तक्क–तर्क –विमर्श । भग० ५६ । ठाणा० ४६६ । तर्कः तर्को–विमर्श अवायात् पूर्वा ईहाया उत्तरा प्राय शिर कण्डूयनादय पुरुषधर्मा । ठाणा० २१ । तर्क –विमर्शस्तत्स्वभावेहा । विशे० १६४ । तर्क तर्काश्यम् । पिण्ड० १६८ ।
तक्कण–तर्कण प्रार्थनम् । बृ० प्र० ३१२ अ ।
तक्कर–तस्करा –सर्वदा चौर्यकारिण । ज० प्र० ६६ । चौर । ज्ञाता० ८० । तदेविश्क करोतीति तक्करो । नि० चू० द्वि० ३८ आ । तदेव कुर्वन्तीति तस्करा सर्वकाल चौर्यकारिण । उत्त० ३१२ ।
तक्करघराणि–तस्करगृहाणि–तस्करनिवासात् शृङ्गाटकादीनि प्राग व्याख्यातानि । ज्ञाता० ८१ ।
तक्करट्ठाणाणि–तस्करस्थानानि–शून्यदेवकुलागारादीनि । ज्ञाता० ८१ ।
तक्करत्तण–तस्करत्व–अधर्मद्वारस्य नवम नाम । प्रश्न० ४३ ।
तक्करपओगे–तस्करप्रयोग चौराणा हरणक्रिया प्रेरणम् । आव० ८२७ ।
तक्कलि–वलयाकारवृक्षविशेष । भग० ८०३ ।
तक्कलिमत्थए–तक्कली–कन्दली तन्मस्तक–तन्मध्यवर्तीगर्भ । आचा० ३४६ ।
तक्कली–वलयविशेष । आचा० ५७ । प्रज्ञा० ३३ कन्दली । आचा० ३४६ ।
तक्कसेणे–अतीताया उत्सर्पिण्यां पञ्चम कुलकर । ठाणा० ५१८ ।
तक्का–तर्का स्वकीयविकल्पना । सूत्र० ३७ । तर्क एवमेव चायमर्थ उपपद्यते इत्यादिरूपा । दश० १२५ ।
तक्कारो–तदेव–चौर्यं करोमीत्येवशील तत्कर । प्रश्न० ४६ ।
तक्खि–शाखा । बृ० द्वि० १८० अ ।
तक्किया–तर्कयित्वा–पर्यालोच्य । आचा० २७३ ।
तक्की–उपजीवक । बृ० प्र० २६६ अ ।
तक्कोयण–तक्रौदन–तक्रमिश्रमोदनम् । ओघ० ४६ ।
तक्खणओलुग्ग–तत्क्षणमेव–प्रग्रामोनिवसनप्रवन्दाश एव अवरुग्ण–म्लानम् । भग० ४६७ ।
तक्खणमहामती–तत्स्थानवर्ती । नि० चू० प्र० २०८ अ ।
तक्ष –रय । उत्त० ४१३ । सूत्रपा० । अनु० २२३ ।

तक्षकः-रथकार । अनु० ४१३ ।
तक्षशिलातलं- । आव० १४७ ।
तगर-सुगन्धिद्रव्यम् । अनु० १५४ ।
तगए-गन्धद्रव्यविशेष । भग० ७१३ । प्रश्न० १६२ । ज्ञाता० २३२ । गन्धद्रव्यम् । जीवा० १९१ । ज० प्र० ३५ ।
तगरसमुग्गयं-तगरसमुद्गकम् । जीवा० २३४ ।
तगरा-सुव्यवहारकाचार्यस्थानम् । व्य० प्र० २५७ अ । नगरीविशेष । उत्त० ९०, १०० ।
तगरायड-तगरासमीप नगरम् । अनु० १४९ ।
तग्गयं-तद्गत-तत्सूत्रकम् । जीवा० २६९ ।
तच्चपि-त्रिरपि । आव० २६२ ।
तच्च-तथ्या-अविपरीता । उत्त० ४७२ । अवितथा । उत्त० ५५५ । तत्त्वरूपः ऐदम्पर्यसमन्वित । ज्ञाता० १७३ ।
तच्चकम्म-तथ्यानि-सफलानि अव्यभिचारितया यानि कर्माणि क्रियास्तत् । उपा० ४० ।
तच्चणिओ-तच्चनीक बौद्धः । दश० ५४ । आव० ४११ ।
तच्चणिय-तच्चनीक बौद्ध । दश० ४७ ।
तच्चणियसड्ढो-तच्चनीकश्राद्ध । आव० ७६६ ।
तच्चण्णिओ-तच्चनीक बौद्ध । आव० ४१६ । तच्चनीक बौद्ध । आव० २६५ । दश० ५३ ।
तच्चनिक.-बौद्ध । आव० ५६५ ।
तच्चन्नि-तच्चनीक बौद्ध । औप० ७४ ।
तच्चा-तत्त्वानि-वस्तूनामैदम्पर्याणि । ठाणा० ४९१ ।
तच्चावाती-तत्त्ववादी-शतानीकराज्ञो धर्मपाठक । आव० २२२ ।
तच्चावातेति-तत्त्वानि-वस्तूनामैदम्पर्याणि तेषां वादस्तत्त्ववाद, तथ्यो वाद-तथ्यो वादस्तथ्यवाद । ठाणा० ४९१ ।
तच्चासत्तराइंदिया-सप्तरात्रिन्दिवानि-अहोरात्राणि यासु सा सप्तरात्रिन्दिवास्ताश्च तिस्रो भवन्तीति । सम० २१ ।
तच्चिचणगा-चरगविसेसो । नि० चू० तृ० ३१ अ ।
तच्चित्ते-तस्यामेव चित्त-भावमन सामान्येन वा मनो यस्य स तच्चित्त । विपा० ५३ ।
तच्छण-तक्षण-क्षुरादिना त्वचस्तनूकरणम् । विपा० ४१ । त्वच -क्षुरप्रादिना तनुकरणम् । ज्ञात० १८३ ।
तच्छमान-तक्षणुवान्-तनूकुर्वन् । अनु० २२३ ।
तच्छिओ-तक्षित त्वगपनयनत । उत्त० ४६१ ।
तजाए-तज्जात सहक् शब्दे आचार्यं प्रत्युत्तरदाता शिष्य । आव० ७२६ ।
तज्जइ-तर्जयति-अङ्गुलिशिरश्चालनेन तिरस्करोति । भग० १६६ ।
तज्जण-तर्जन-ज्ञास्यसि रे ! इत्यादि वचनम्, वचनविशेष । प्रश्न ५६ । पर प्रति ज्ञास्यसि रे ! जाल्मेत्यादि भणनम् । औप० १०७ ।
तज्जणा तर्जना शिरोऽङ्गुल्यादिस्फोरणतो ज्ञास्यसि रे जाल्मेत्यादिभणनम् । औप० १०३ । तर्जना-असूयादिभिः । दश० २६७ । ज्ञास्यसि रे जाल्मेत्यादि भणनम् । अन्त. १८ । तर्जना-प्रर्जनीचालनेन ज्ञास्यसि रे दुष्ट इत्यादि भणनरूपा । प्रश्न० १०९ ।
तज्जना-तर्जना-अगुलिभ्रमणभ्रूक्षेपादिरूपा । उत्त०४१६ ।
तज्जमाणे-कुन्तावष्टम्भात् तर्जयन् ज्ञास्यथ रे यन्मम इद च इद च न दत्स्वेत्येव भेषयन् । विपा० ४० ।
तज्जा-तर्जा-हस्तादिना चौर्यं प्रति प्रेपणादि सज्ञाकरणम् । प्रश्न० ५८ ।
तज्जाइणी-तज्जातीया-स्वदोषा । आव० ७१० ।
तज्जातं-चेच्च । । राज० ३७ । द्रव्यप्रकार । ठाणा० २८८ ।
तज्जातदोसे-तस्य गुर्वादेर्जात्-जाति प्रकारो वा मर्म-मर्मकर्मादिलक्षण तज्जात तदेव दूषणमितिकृत्वा दोषस्तज्जातदोष तथाविधकुलादिना दूषणमित्यर्थ अथवा तस्मात्-प्रतिवादिादे सकाशाज्जात क्षोभाम्नस्तम्भादिलक्षणो दोषस्तज्जातदोष । ठाणा० ४९२ ।
तज्जातपारिस्थापनिकी-पारिस्थापनिक्या प्रथमो भेद आव० ६१६ ।
तज्जातीयरूव-तज्जातीयरूपम् । आव० ६७६ ।
तज्जाय-तज्जात-तुल्यजातीयम् । आव० ६२२ ।
तज्जायसंसट्ठकप्पिय-यत्प्रकार देय द्रव्य तज्जातेन

तत्प्रकारेण-द्रव्येण ये संसृष्टे हस्तभाजने ताभ्यां दीयमानं ग्राह्यमित्येवरूपः कल्पः समाचारो यस्य स तज्जातसंसृष्टकल्पिकः। प्रश्न० १०६।

तज्जायसंसट्ठचरए-तज्जातेन देयद्रव्याविरोधिना यत् संसृष्टं हस्तादि तेन दीयमानं यश्चरति स तज्जातसंसृष्टचरकः। औप० ३६।

तज्जिओ-तर्जितः भर्त्सितोऽत्यन्तपीडित इति। उत्त० ८६।

तज्जियं-तर्जितं यद् न कुप्यसि नापि प्रसीदसि काष्ठशिव इवेत्यादि तर्जयन् निर्भर्त्सयन् वन्दते, अगुल्यादिभिर्वा तर्जयन्, कृति कर्मणि एकोनविंशतितमो दोषः। आव० ५४४।

तज्जिय-तर्जयित्वा-भयमुपदर्श्य। आव० ३४१।

तज्जेज्जा-तर्जयामि। उपा० ४२।

तज्जेंति-भर्त्स्यसि पापे! इत्यादि भणनतः। ज्ञाता० २००।

तज्झतिया-समानकुलगणसमवर्तिन्यः भगिनी वा। व्य० प्र० २४८।

तडाक-कासार। नदी० १५३।

तट्ट-तट्ट-स्थालम्। प्रज्ञा० ७६।

तट्ठ-त्वष्टा-द्वादश मुहूर्तनाम। सूर्य० १४६। तष्टपट्टितम्। सूत्र० १६५। त्वष्टा-त्वष्टनामको देवस्तेन स्वामी चित्रेत्यपरनाम। ष० प्र० ४६६।

तड-तीर- । नि० चू० प्र० ६८ अ।

तडउडा-तडवडा-आउली। जं० प्र० ३४।

तडउडाकुसुम-आउली तस्याः कुसुमं तडवडाकुसुमम्। जं० प्र० ३४।

तडतड-त्रटत्रटद्। उत्त० ११३।

तडतडेंत-तटतटायमाना-तथाविध ध्वनिं विदधाना। ज्ञाता० १५६।

तडफडता-भृशं आकुलतया गमनागमनं कुर्वाणा। बृ० तृ०।

तडफडा-गमनं । बृ० तृ० ५५ आ।

तडफडेति-विवदति। । नि० चू० प्र० ११२ अ।

तडयडा-आउली। जीवा० १६१। राज० ३३।

तडाग-खननसम्पन्नमुत्तानविस्तीर्णजलस्थानम्। उपा० १०।

तडाग-तडाग। प्रज्ञा० २६७। सरः। जं० प्र० १२३। जीवा० १८६। तडाग-कासारः। भग० २३७।

तडागमहो-तडाकमह-तडाकसत्क उत्सवः। जीवा० २८१।

तडि-तटी-पार्श्वम्। अनुत्त० ६।

तडिओ-आरामिकः। आव० २६५। वड। आव० ४२१।

तडिग-तटिक। आव ३८४।

तडिगा-उपानही। ओघ० ३४।

तडिगादिदेवणय-उपानही परिधाय देवन-सङ्ग्रममग्रे कृत्वा व्रजति। ओघ० ३४।

तडित-पिंजितं कृत। बृ० द्वि० ११६ आ।

तडिय- नि० चू० प्र० १८६ अ।

तडियकप्पडिओ-तटिककार्पटिक। आव० ११५।

तडिया- । नि० चू० प्र० ३४४ अ।

तडी-चिचणी। बृ० द्वि० ३० अ। तटी नद्यादीनां तटम्। ज्ञाता० ६७। आव० २७४। छिण्णटेका। नि० चू० प्र० ३० अ।

तड्डेति-स्फोटति। नि० चू० प्र० १२४ आ।

तण-तृण विरणादि। उत्त० ३७०। तृणानि-कुशार्जुनकाऽर्जुनादीनि। प्रज्ञा० ३०। तृणं दर्भादि। दश० २२६। आचा० ३०। वीरणादि। भग० ३०६।

तणइओ-तन्तुव। आव० ३४४।

तणकट्ठ-तृणकाष्ठ। आव० ४२१।

तणग-तृणविशेष। सूत्र० ३०६।

तणणं- । नि० चू० द्वि० १६६ अ।

तणपणए-तृणपञ्चक-शालि १ व्रीहि २ कोद्रव ३ रालको ४५ रण्यतृणमरतानम्। आव० ६५२।

तणपणग-तृणपञ्चकम्। ठाणा० २३४।

तणपिडिगा-तृणपिण्डिका-तृणभार, तृणपूलिका वा। आव० ६६७।

तणपिंडिय-तृणपिण्डिका। आव० ६८२।

तणपीढगं-पलालमयं तणपीठगं। नि० चू० द्वि० ६२ आ।

तणपूलिअं-तृणपूलम्। आव० १५२।

तणफासा–तृणस्पर्श अशुषिरतृणस्य दर्भादेः परिभोग, सप्तदशपरीषह । आव० ६५७ ।
तणवेंटका–त्रीन्द्रियजन्तुविशेष । जीवा० ३२ ।
तणवेंटिया–त्रीन्द्रियजन्तुविशेष । प्रज्ञा० ४२ ।
तणमूल–तृणमूलम् । प्रज्ञा० ३४ ।
तणय–स्तकम् । आव० ३१४ । उत्त० १६० ।
तणवणस्सइकाइए–तृणवनस्पतिकायिका बादरवनस्पतिकायिकाः । जं० प्र० १६८ ।
तणवणस्सइकाइय–तृणवनस्पतिकायिका –बादरवनस्पतय । भग० ३०६ ।
तणवणस्सइगणो–तृणवनस्पतिगण –बादरवनस्पतीना समुदाय । प्रश्न० १२ ।
तणवणस्सति–तृणवनस्पतय तृणवनस्पतय । ठाणा० ५२१ । बादरावनस्पतयोऽग्रबीजादय । क्रमेण कोरण्टका उत्पलकन्दा वटा ताल्लयो वटा एवमादय । ठाणा० ३२५ । तृणवनस्पतयो बादरा इत्यर्थ । ठाणा० १२२ ।
तणवणस्सतिकातिता–वनस्पति स एव काय शरीर येषां ते वनस्पतिकाया त एव वनस्पतिकायिका तृणप्रकारा वनस्पतिकायिकास्तृणवनस्पतिकायिका बादरा इत्यर्थ । ठाणा० १८६ ।
तणवत्थुल–वनस्पतिविशेष । भग० ८०० ।
तणसाला–दर्भादितणवृक्षाण अवोपगास तणसाला । नि० चू० प्र० २६५ अ ।
तणसूए–तृणसूक–तृणाग्रम् । भग० ६७७ ।
तणसूयं–तृणाग्रम् । भग० ३७६ ।
तणसोल्लिअ–मल्लिकापुष्पम् । जं० प्र० २१२ । ज्ञाता० २२२ ।
तणहार–तृणहारक त्रीन्द्रियजीवभेद त्रीन्द्रियजन्तुजीवा ३२ । उत्त० ६९५ । प्रज्ञा० ४२ ।
तणहारिगो–तृणहारक । आव० ६७६ ।
तणु–तनु–तनुकम् । तनव प्रतला । जं० प्र० ११० । तनु–कृशम् ।
तणुअंत–प्रश्रवणपरिणामि । स० ।
तणुअ–तनुक –सूक्ष्मोर्मा । जं० प्र० १०७ ।
तणुइ–तन्वी–शेषपृथिव्यपेक्षयाऽतितनुत्वात्, ईषत्प्राग्भाराया तृतीय नाम । प्रज्ञा० १०७ ।
तणुए–तनुक लघु सुजरम् । ज्ञाता० १७७ ।
तणुओ–तनुक –कृशम् । आव० ७६४ ।
तणुतणूइ–अतितनुत्वात्तनुतनुरिति, ईषत्प्राग्भारायाश्चतुर्थ नाम । ठाणा० ४४० । तनुभ्योऽपि तन्वी मक्षिकापत्रतोऽपि पर्यन्तदेशेऽतितनुत्वात् तनुतन्वी, ईषत्प्राग्भारायाश्चतुर्थं नाम । प्रज्ञा० १०७ ।
तणुनमियं–तनु–कृश नत तमुन्नतमीषन्नतम् । जीवा० २७५ ।
तणुय–तनुक, सुजरम् । भग० ६७२ । तनुक –दरिद्र । भग० १०१ । प्रतलम् । ज्ञाता० १३८ ।
तणुया–तनु –शरीर तत्र जाता तनुजा । उत्त० ४०७ ।
तणुल–तनु –शरीर सुखस्पर्शतया लाति–अनुगृह्णाति इति तनुल तनु सुखादि । जं० प्र० १०७ ।
तणुवाए–तनुवात –विरलपरिणामो घनवातस्याधस्थायी । जीवा० २६ । तनुवात–विरलपरिणामो घनवातस्याधःस्थायी । प्रज्ञा० ३० ।
तणुवाएसु– । प्रज्ञा० ७७ ।
तणुवायवलएसु– । प्रज्ञा० ७७ ।
तणू–तनु –बोन्दि शरीरम् । प्रज्ञा० १०८ ।
तणूइ– । सम० २२ ।
तणूति–तनु –ईषत्प्राग्भारायास्तृतीय नाम । ठाणा० ४४० ।
तणूयतरिति– । सम० २२ ।
तण्डुल–पुष्प उपयोगी । सूर्य० २६३ ।
तण्णगाइ–तर्णकाणि–वत्सरूपाणि । बृ० प्र० ३१७ अ ।
तण्हा–तृष्णा–प्राप्तार्थाविनाशाभ्यवेच्छा । भग० ५७३ । तृष्णा–प्राप्तार्थसंरक्षणरूपा । प्र० ६२ । धनाद्याकाङ्क्षा–परिग्रहस्य सप्तविंशतितम नाम । । प्रश्न० ९२ । तृष्णा–द्रव्याभ्यवेच्छा । प्रश्न० ९७ । तृष्णा–विद्यमानद्रव्याभ्यवेच्छा । प्रश्न० १२४ । प्राप्तद्रव्यस्याभ्यवेच्छा । प्रश्न ४४ । तृष्णा–द्रव्यादिविषया । उत्त० ५६० । मति मूर्च्छा । उत्त० ६२३ ।
तण्हाइओ–तृष्णादित –पिपासित । प्रश्न० १६ ।
तण्हाएत्तो–तृषित । उत्त० ८७ ।

तण्हागेहि–तृष्णागृद्धि–तृष्णा–प्राप्तद्रव्यस्याव्येच्छा गृद्धि अप्राप्तस्य प्राप्तिवाञ्छा तृतीयाधर्मद्वारस्याष्टाविंशतितम नाम। प्रश्न० ४४।
तण्हावुच्छेअणं–तृड्व्यवच्छेदन–तद्विषयाभिलाषनिवृत्ति। आव० ८५१।
तत–तत वीणादि। प्रश्न० ८। तत–वादित्रविशेष। जं० प्र० ४१२। आवज्जविसेसो। नि० चू० प्र० १ अ। तन्त्रीवध्रादिवद्धमातोद्यम्। ठाणा० ६३। वीणा विपञ्चीबद्धीसकादि तन्त्रीवाद्यम्। आचा० ४१२। तत–वीणादिकम्। जं० प्र० १०२। गत तमो वा। उत्त० २५६। तत–सको नाम। उत्त० २८०। तत्र। उत्त० १५६।
ततगइ–ततस्य ग्रामनगरादिक गन्तु प्रवृत्तस्वेन तच्चाप्राप्तत्वेन तदन्तरालपथे वर्तमानतया प्रसारितक्रमतया च विस्तारं गतस्य गतिस्ततगति, ततो वाऽवधिभूतग्रामादेर्नगरादौ गति। भग० ३८१।
ततगती–तता–विस्तीर्णा सा चासौ गतिश्च ततगति, यं ग्राम सन्निवेस वा प्रति प्रस्थितो देवदत्तादिस्त ग्रामादिकं यावदद्यापि न प्राप्नोति तावदन्तरा पथि एकैकस्मिन् पदन्यासे तत्तद्देशान्तरप्राप्तिलक्षणा गतिरस्तीति तत गति। प्रज्ञा० ३२६।
तता–विस्तीर्णा। प्रज्ञा० ३२८।
ततोपाए–तत प्रभृति। ओघ० ७३।
ततोहुत्तो–तत सकाशात्। उ० १५६।
ततु–सर्वलिङ्गवचनेष्वव्ययम्। प्रज्ञा० ८।
तक्करा–आसङ्ग सम्बन्ध–तत्करा–रागद्वेषकारिण। आचा० २११।
तत्त–तप्त–तापितम्। ज्ञाता० ६।
तप्त–तापितम्। विपा० ३४। तत्त्व–वस्तुस्वरूपम्। प्रश्न० ३५। तप्त सञ्जाततापम्। भग० १६६। ताप। भग० ३०७।
तत्तकवल्लकब्भूय– । भग० १६६।
तत्तजला–तप्तजला, अन्तरनदी नाम। जं प्र० ३५२।
तत्तजलाओ– । ठाणा० ८०।
तत्तजुत्त–तोत्रयोक्त्र–प्राजनकबन्धनविशेष मर्माघट्टनाहतास्यामिति। उत्त० ४६०।
तत्तडिया–वरत्नाका। ग०।
तत्ततवो–तप्त तपो येन स तप्ततपा। सूर्य० ४।
तत्तऽनिव्वुड–तप्तानिर्वृत–अप्रवृत्तत्रिदण्डम्। दश० १८५।
तत्तफासुअ–तप्तप्रासुक तप्त सत्प्रासुक त्रिदण्डोद्वृत्त, नोष्णोदकमात्रं, प्रतिगृह्णीयाद् वृत्त्यर्थम्। दश० २२८।
तत्तमासगाइप्पो–तप्तमाषकादि–द्रव्यप्रत्यय। आव० २८०।
तत्तवती–अजुनराज्ञी। विपा० ९५।
तत्तानिव्वुडभोइत्त–तप्तानिर्वृतभोजित्व–तप्तञ्च तदनिर्वृतञ्च–अत्रिदण्डोद्वृत्त चेति विग्रह, उदकमिति विशेषणान्यथानुपपत्त्या गम्यते, तदभोजित्व–मिश्र सचित्तोदकभोजित्वम्। दश० ११७।
तत्ति–तप्ति। पिण्ड० ७३। व्यापार सू० द्वि० ४० अ।
तत्तिल्ला–अर्थिन। ओघ० ७१। तत्परवती, परायणा। नंदी० ६४।
तत्तिहल्लो–दक्ष। आव० २११।
तत्ती–तप्ति चिन्ता। आव० ६८३। तप्ति–ताप। उत्त० ४३३। गवेषण पालन वा। प्रश्न० ६७। तत्ति–सारा। व्य० प्र० १७१ अ।
तत्त्वज्ञः–सर्वज्ञस्तीर्थकृत्। आव०।
तत्त्वार्थश्रद्धानं–तत्त्वार्थश्रद्धानं तत्त्वानां निश्चित वाऽर्थानां प्रत्यय। तत्त्वा० १-२। प्रशमादिपञ्चलक्षणव्यङ्ग्य।
तत्त्वानुरूप–विवक्षितवस्तुस्वरूपानुसारिता, पञ्चदशो वचनातिशय। सम० ६३।
तत्थ–तस्मात्। व्य० द्वि० ७७ आ। त्रस्त–न उद्विग्न। उत्त० ४६१। त्रस्तम्। भग० १६६।
तत्थगए–तत्रगत। आव० ७२६।
तत्था–त्रस्ता उद्विग्ना–सञ्जातभया भयप्रकर्षाभिधानायैकार्था। विपा० ४३। ज्ञाता० ९४। नष्टा। जं० प्र० २३९।
तत्पद–तस्य पद्यते–गम्यते येनार्थस्तत्पद–अभिधानम्। आचा० २३१।
तत्पर–तत्र द्रव्यपर तावत्तद्रूपतयैव वर्तमान–परमन्यत्तत्परम्। आचा० ४१५।

तत्व-शब्दार्थरूपम् । विशे० २२ । लक्षणम् । विशे० १०७ ।
तत्रस्था-स्वरूपस्था । आव० ३३८ ।
तत्समधं- । उपा० ७ ।
तथा-आनन्तर्ये । आव० १० । अवधिज्ञानसारूप्यप्रदर्शनार्थं । आव० ८ ।
तथाकार -गुर्वादिषु सूत्राणपु यथाऽऽदिशत यूयं तथैवेति भणनम् । बृ० प्र० २२२ अ ।
तथाज्ञान -ज्ञानप्रश्न । ठाणा० ३७६ ।
तथामव्यत्व-भव्यत्वभेद । प्रज्ञा० ११२ ।
तथारूप -तथाविधोऽविज्ञानव्रतविशेष इत्यर्थ । भग० ६६४ ।
तदत्तरे-यवनिकान्तर इत्यर्थं । उत्त० ४२५ ।
तदज्झवसाणे-तस्यामेवाध्यवसान भोगक्रियाप्रयत्नविशेषरूप यस्य स तदध्यवसान । विपा० ५३ ।
तदट्ठायउत्ते-तदर्थं-तत्प्राप्तये उपयुक्त-उपयोगवान् य ■ तदर्थोपयुक्त । विपा० ५३ ।
तदन्न-तदन्यत्-तस्मात् घृतादे अन्यत्-क्षीरगुडादि । ओघ० १७० ।
तदन्नवत्थुते-तस्माद्-परोपन्यस्ताद् वस्तुनोऽन्यदुत्तरभूत वस्तु यस्मिन्नुपन्यासोपनये स तदन्यवस्तुक । ठाणा० २५४ ।
तदन्नवयणे-तदन्यवचनम् तस्माद्-विवक्षितघटादेरन्य पटादिस्तस्य वचनम् । ठाणा० १४१ ।
तदप्पियकरणे-तस्यामेवार्पितानि - ढौकितानि करणानि इन्द्रियाणि येन स तदर्पितकरण । विपा० ५३ ।
तदुपरि-तत्र जङ्घार्द्धप्रमाण उदकसस्पर्शो सघट्ट नाभिप्रमाण उदकसस्पर्शो लेप तत उपरि उदकस्पर्शो तदुपरि । व्य० प्र० २५ आ ।
तदुब्भवो-तदुद्भव -शरीरोद्भवो गण्डादि । आव० ७६४ ।
तदुभयपतिट्ठिए-तदुभयप्रतिष्ठित -आत्मपररूपोभयप्रतिष्ठित । प्रज्ञा० २६० ।
तदेक्कदेसभाए-तदेकदेशभागे मद्रादियाप्यादिषु । प्रज्ञा० ७६ ।

तदेक्कदेसो-तदेकदेश द्रव्यहेतुभूत । आव० ३२७ ।
तद्दव-तद्द्रव्य-पटादेर्द्रव्य तन्त्वादि । आव० २७८ ।
तद्दव्वसुद्धी-यद् द्रव्यमन्येन द्रव्येण सहासयुक्त तच्छुद्ध भवति क्षीर दधि वा असौ तद्द्रव्यशुद्धि । दश० २११ ।
तद्दव्वकरणं-तद्द्रव्यमिति तस्यैव पटादेर्द्रव्य तद्द्रव्य-तन्त्वादि तदेव कारणमिति द्रष्टव्यम् । आव० २७८ ।
तद्द्रव्यनानाता-द्रव्यनानाताया भेद । आव० २८१ ।
तद्दिट्ठी-तस्य आचार्यस्य दृष्टिस्तद्दृष्टि । सतत वसितव्य हेयोपादेयार्थेषु यदि वा तस्मिन् सयमे दृष्टिस्तद्दृष्टि स एव वाऽऽगमो दृष्टिस्तद्दृष्टि । आचा० २१५ ।
तद्दिवस-प्रतिदिनम् । वृ० प्र० २६३ अ । प्रतिदिवस-दिने दिन इत्यर्थ । व्य० द्वि० २६७ आ ।
तद्देक्कदेसेण-तेषां-द्रव्याणामेकदेशेन इत्यर्थ । ठाणा० २६० ।
तद्देसे-तस्य देशस्तद्देश । दश० ३५ ।
तद्दोस-स्वदोष -कुष्ठी । ओघ० १६३ । तद्दोष । दश० ३५ । नि० चू० प्र० १८८ आ ।
तद्दोसाई-स्वद् दोषा स्वदोष क्षयव्याध्यादि । व्य० द्वि० १६० आ ।
तद्दोसी-स्वदोषी-कुष्ठी । पिण्ड० १३६ ।
तद्धितो-तद्धित -तस्य हित । आव० १५५ ।
तद्धिय-तद्धित -तस्मै हित तद्धितमित्यासर्थाभिधायको य प्रत्यय । प्रश्न० ११७ ।
तद्युक्त-बलीवर्दादिभि । ठाणा० २४० ।
तनु-स्तोक मन्द यतनयेति । उत्त० ४११ ।
तनुवर्गणा-ध्रुवानन्तर वर्गणानामुपरि प्रत्येकमेकोत्तरवृद्धियुक्तानन्तवर्गणात्मिकाअतस्र एव तनुवर्गणा भवन्ति । विशे० १३१ । भेदाभेदपरिणामाभ्यामौदारिकादियोग्याताऽभिमुखा । आ० ३५ ।
तन्नग-वालवत्स । नि० चू० द्वि० ९६ ■ ।
तन्त्रपाल -दण्डनायक । भग० ३१८ ।
तन्निवेसणे-तस्य-गुरोर्निवेशन-स्थान यस्यासो तन्निवेशन-, सदागुरुकुलवासी । आचा० २१५ ।
तपआचार:-अनशनादिभेदो द्वादशधा । ठाणा० ३२५, ६५ ।

**तपः**–सिद्धवे दशम भेद । ठाणा० २५। लिङ्ग । ठाणा० ३३७ । तप प्रायश्चित्त–त्रिविधे प्रायश्चित्ते द्वितीयम् । बृ० प्र० ४८ आ ।

**तपः**–संयमरक्षणार्थं कर्मनिर्जरार्थं च चतुर्थषष्ठाष्टमादि सम्यगनशनम् । तत्त्वा० १–१६ ।

**तप.क्षपणं**–सम्यगुपक्रमेणानुदीर्णोदीरणदोषक्षपणवदन्यनिमि त्तप्रक्रमेणापरिक्लेशम् । दश० २७४ ।

**तपति**–दुनोति । ठाणा० ३६४ ।

**तपसढं**–ज बहु देवसिय । दश० चू० ८१ आ ।

**तपोऽर्हं**–प्रायश्चित्तविशेष । व्य० प्र० १८७ आ ।

**तप्प**–तप्र काष्ठसमुदायविशेष । प्रज्ञा ५४२ । नदी० ८८ । उडुपक । भग० ५२४ । तप्र–मत्स्यग्रहणार्थं तरकाण्डविशेष । प्रश्न० १३ । तप्र–उडुकस्तस्येवाऽऽकारो यस्याऽसौ तप्राकारोऽवधिर्नारकाणां मन्तव्य, तप्रश्च किलाऽऽयतत्र्यस्रो भवति । विशे० ३५३ ।

**तप्पक्खिओ**–तद्पाक्षिक –तस्य हितैषी । बृ० द्वि० १६५ अ ।

**तप्पक्खिय**–तत्पाक्षिक –तस्य सोमस्य प्रयोजनेषु सहाय । भग० १६६ । तत्पाक्षिक –केवलिपाक्षिक स्वयबुद्ध । भग० २२२ ।

**तप्पडिरूवगववहारे**– तत्प्रतिरूपकव्यवहार – अधिकृतेन सदृशस्य प्रक्षेप । आव० ८२२ ।

**तप्पढम**–तत्प्रथम तत्कालम् । जीवा० २७१ ।

**तप्पण**–वर्णबलादिनिमित्त घयादिणेहपाण तप्पण । नि० चू० द्वि० ८६ अ । तर्पण–स्नेहादिभि शरीरबृहणम् । विपा० ४१ । स्नेहद्रव्यविशेषैर्बृहणम् । ज्ञाता० १८३ ।

**तप्पणादूयालिया**–मथ्यमानसाक्तुक । दश० ५६ ।

**तप्पती**–तप्यते–पीडयते क्लेशभाग्भवति । सूत्र० १८३ ।

**तप्पभेएण**–तेषा मूलजातिभेदाना येऽन्ये प्रकृष्टा सूक्ष्मतरा भेदास्तैरित्यर्थ । विशे० ६२२ ।

**तप्पागारे**–तप्राकार –उडुपकाकार । आव० ४१ ।

**तप्पुरक्कारे**–पुरस्करण पुरस्कार –सर्वकार्येष्वग्रत स्थापन, तस्य–आचार्यस्य पुरस्कारस्तत्पुरस्कार । आचा० २१५ ।

**तप्रादिरूप**–आकारविशेष । प्रज्ञा० ५३६ ।

**तबरि**–गुच्छाविशेष । प्रज्ञा० ३२ ।

**तब्भत्तिय**–तद्भक्तिक –तत्र सोमे भक्ति –सेवा बहुमानो वा यस्य स तद्भक्तिक: । भग० १६६ ।

**तब्भवं**–तद्भवमरण, मरणस्य सप्तमो भेद । उत्त० २३० । तस्मिन् भवे जीवित तद्भवजीवितम् । आव० ४८० । तत्थेवकाए तब्भवो । नि० चू० प्र० १८८ आ ।

**तब्भवजीवियं**–तद्भवजीवित तस्यैव पूर्वभवस्य समानजातीयतया सम्बन्धि जीवितम् । ठाणा० ७ । तद्भवजीवितम् । दश० १२२ ।

**तब्भवजीवो**–तद्भवजीव तद्भव एवोत्पन्न । दश० । १२१ ।

**तब्भवमरणं**–जमि भवे वट्टइ तस्सेव भवस्स हेतुसु वट्टमाणो आउय बधित्ता पुणो तस्सेवब्भिउकामस्स ज मरण तब्भवमरण । नि० चू० द्वि० ५२ आ । यस्मिन् भवे–तिर्यग्मनुष्यभवलक्षणे वर्तते जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुन तत्क्षयेण म्रियमाणस्य यद्भवति तत्तद्भवमरणम् । सम० ३३ । यस्मिन् भवे वर्तते जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुनर्म्रियमाणस्य मरण तद्भवमरणम् । ठाणा० ६३ ।

**तब्भविय**–तद्भविकमरण–यस्मिन्नेव मनुष्यभवादौ मृत । पुनस्तस्मिन्नेवोत्पद्य यन्म्रियते इति । उत्त० २३० ।

**तब्भारिया**–तस्य सोमस्य भार्या इव भार्या अत्यन्त वश्यत्वात्पोषणीयत्वाच्चेति तद्भार्या, तद्भारो वा येषा वोढव्यतयाऽस्ति ते तद्भारिका । भग० १६६ ।

**तब्भाव**–तद्भाव । ठाणा० ३३१ । तस्य भावस्तद्भाव पुवेद । व्य० द्वि० १७५ आ ।

**तब्भावणाभाविए**–तद्भावनया–कामध्वजाचिन्तया भावितो–वासितो य तद्भावनाभावित । विपा० ५३ ।

**तमतमेति**–तमस्तमा यत प्रबलान्धकारतया परिणमते । बृ० द्वि० १६७ आ ।

**तमपविट्ठ**–तम प्रविष्ट इव तम प्रविष्ट । भग० ३१२ ।

**तमपविट्ठा**–तम प्रविष्टा –अज्ञानमग्ना । प्रश्न० ९८ ।

**तम**–तमयति–खेदयति जनलोचनानीति तम । उत्त० ३८ । दु खसमुद्घातेन सदसद्विवेक प्रध्वंसित्वात्तमःस्थानम् । अज्ञानरूप, ज्ञानावरणादिरूप महत्तर तम ।

सूत्र० २२ । कण्हचउद्दसीए रात्रो मासरदव्याभावो । नि० चू० प्र० ३०२ आ । तम-अज्ञानम् बद्धस्पृष्ट-निधत्त ज्ञानावरणीय वा । आव० ७८८ । अप्काय-परिणामरूपोऽन्धकार । ठाणा० २१७ । तम -अंधकार-रूपत्वात् । भग० २६६ । नरक । उत्त० ४०० । कृष्ण-चतुर्दशी रात्री ध्वान्तम् । बृ० तृ० १५४ आ । न किंचि-त्पश्यतीत्यर्थ । नि० चू० प्र० ३०२ आ ।

**तमतमप्पभा**-तम तम प्रभा । प्रज्ञा० ४३ ।

**तमतमा**-अतिशयतमोरूपद्रव्ययुक्ता पृथ्वी । अनु० ८९ । प्रकृष्ट तमस्तमस्तम । तमस्तम प्रभेत्यर्थ । भग० ६- । तमस्तम प्रभा नाम्नी सप्तमी पृथिवी । भग० ६८ ।

**तमतिमिर**-रातो जदा रयरेणु धूमिगा भवति तदा तमतिमिर । नि० चू० प्र० ३०२ आ । सरजो धूमि-कादिक कृष्णचतुर्दशी रात्रि तम । बृ० तृ० १५४ आ ।

**तमतिमिरपडलं**-समेघ दुर्दिनरजोधूमकादिक कृष्णचतु-दर्शीरात्रिध्वान्त तदा तमतिमिरपडलम् । बृ० तृ० १५४ आ । रातोए रायादिआ मेह दुद्दिण व भवति अधकार-विशेष । नि० चू० प्र० ३०२ आ ।

**तमतिमिरपडलविद्धंसणं**-तमस्तिमिरपटलविध्वसन -अ-ज्ञानतिमिरवृन्दविनाशनम् । आव० ७८८ ।

**तमपडलमोहजालपडिच्छन्न**-तम पटलमिव तम पटल-ज्ञानावरण मोहो-मोहनीय तदेव जाल मोहजाल ताभ्या प्रतिच्छन्ना-आच्छादिता ये ते तम पटलमोहजा-लप्रतिच्छिन्ना । भग० ११२ ।

**तमप्पभा**-तम प्रभा । प्रज्ञा० ४३ ।

**तमबलपलज्जणो**-तमो बलेन-अन्धकारबलेन मत्सरत् प्रलज्जते इति तमोबलप्रलज्जन प्रकाशचारी । ठाणा० २४६ । तमो-मिथ्याज्ञान अन्धकार वा तदेव बल तत्र वा अथवा तमसि-उत्कृष्टे बले च सामर्थ्ये प्ररज्यते-रति करोति इति तमोबलप्ररञ्जन । ठाणा० २४६ ।

**तमरय**-तमोरजसी-अज्ञानपातके । मम० ११५ ।

**तमस**-तमसं तमोवद् । दशा० १६७ ।

**तम प्रभा**-नरकपृथ्वी । आव० ३६३ । कृष्णद्रव्योप-लक्षिता पृथ्वी । अनु० ८९ ।

**तमा**-रात्रिस्तदाकारत्वात्तमाऽन्धकारेत्यर्थ । भग० ४९३ । ठाणा० १३३ । तमा-अन्धकारयुक्तत्वेन रात्रितुल्य-त्वादधोदिशश्च । ठाणा० ४७८ । अधोदिक् । आव० २१५ । तमोरूपद्रव्ययुक्ता पृथ्वी । अनु० ८९ ।

**तमाल**-वनस्पतिविशेष । भग० ८०३ ।

**तमालपत्त**-तमालपत्रम् । उत्त० १४२ ।

**तमालपत्र**-पत्रविशेष । जीवा० २३६ ।

**तमाले**-वनयविशेष । प्रज्ञा० ३३ ।

**तमिति**- । ठाणा० २१७ ।

**तमिश्रागुहा**- । ठाणा० ७१ ।

**तमिसगुहा**-तमिश्रगुहा । आव० १५० ।

**तमुए**-भगवतीसूत्रस्य षष्ठशतकस्य तमस्कायार्थनिरूप-णाथ पञ्चम । पञ्चमोद्देशक । भग० २५० ।

**तमुकाए**-तमस्काय अन्धकाररराशिरूपत्वात् । भग० २७० ।

**तमुक्काए**-तमसा तमिश्रपुद्गलाना कायोराशिस्तमस्का । भग० २६८ ।

**तमुक्कातेति**-तमस -अप्कायपरिणामरूपस्यान्धकारस्य काय -प्रचयस्तमस्काय । ठाणा० २१७ ।

**तमूयत्ता**-तमस्त्व अत्यन्तान्धतमसत्व जात्यन्धता, अत्यन्ता-ज्ञानवृतता वा । सूत्र० ३१६ ।

**तमोकसिय**-तमसि कार्यो तमसि कषितु-शील यस्य स । पराविज्ञाता क्रिया कुर्वन्तीत्यर्थ । सूत्र० ३१३ ।

**तमोरूवत्ता**-तमोरूपता-अन्धबधिरता । सूत्र० ४२२ ।

**तम्पति**-तमाश्रित्य-तद्व्यवच्छेदायेत्यर्थ । विशे० ३३२ ।

**तम्मण**-तन्मना द्रव्यमन प्रतीत्य विशेषोपयोगं वा । विपा० ५३ । औप० ६० । तत्रैव अर्थादौ मन-विशेषोपयोगरूप यस्य स । भग० ८९ ।

**तम्मुसी**-तेनोक्ता सर्वमङ्गेभ्यो विरतिर्मुक्ति । आचा० २१५ ।

**तम्मुहो**-तन्मुख । आव० ४११ ।

**तय**-तत-मृदङ्गपटहादि । जीवा० २४७ । तत-वीणा-दिकम् । भग० २१७ । जीवा० २६६ । तत-विस्ती-र्णम् । उत्त० ४०७ । त्वक्-वल्कलम् । औप० ७ । बाह्यवल्कम् । ठाणा० १८६ । तिलतुषतिभागमेत्त । नि० चू० प्र० ३५५ अ ।

तया–त्वक्–छल्ली । ज० प्र० २६ । त्वच.–छल्लय । प्रज्ञा० ३१ । त्वक् । सूत्र० ३१२ । त्वक्–त्वविवासार भोक्तृव्यमित्यर्थसूचकत्वात् त्वगुच्यते, साधोरूपमानम् । दश० १८ । त्वक्–चातुर्जातकाङ्गम् । उत्त० १४२ । त्वचा–सनादिकम् । ज० प्र० १४७ ।

तयापाणए– । भग० ६८० ।

तयाहारा–तृणाहारा । निरय० २५ ।

तयाविस–त्वग्विष । आव० २७४, ४२६ ।

तयाविसा–त्वचि विष येषा ते त्वग्विषा । जीवा० ३६ । प्रज्ञा० ४६ ।

तरगवइक्कारे– । अनु० १४६ ।

तरगवती–कामकथाया अनुभूतमधिकृत्य निजानुभवनिवेदयित्री । दश० ११० । मिश्रकथाव्याख्याने स्त्री । दश० ११४ । धर्मकथाविशेष । व्य० द्वि० ११३ आ । बृ० तृ० १६ अ ।

तरंड–पोत । ओघ० ३१ ।

तरंति–शक्नुवन्ति । ओघ० ७५ ।

तर–तर वेगो बल वा । ज प्र० ५३० । भग० ४८० । औप० ७० । शय्यातर । बृ० द्वि० १४७ आ ।

तरइ–तरति–शक्नोति । विशे० ८४ ।

तरई–तरति–क्षेमेण वत्तते । पिण्ड० १२३ ।

तरच्छ–तरक्षव मृगादना । ज० प्र० १२४ । तरक्षु व्याघ्रविशेष । भग० १११, ३०६ । ज्ञाता० ७० । तरक्षु–व्याघ्रजातिविशेष । प्रज्ञा० २५४ । तरक्ष–व्याघ्रविशेष । प्रश्न० ७ । तरक्ष–सनखपदचतुष्पदविशेष । जीवा० ३८ । तरच्छ–वनजीवा । मर० ।

तरण–बाहू । आव० ५६ । निस्तारण । नि० चू० प्र० ६५ अ ।

तरणीय–उडुप नद्यादि । आव० ५६ ।

तरतमजोगो–तरतमयोग–साकारोपयोग । विशे० ११६८ ।

तरति–शक्नोति । नि० चू० प्र० २७ अ ।

तरत्थम– । नि० चू० द्वि० १३३ आ ।

तरपणट्ठा– । ओघ० ३३ ।

तरपण्ण–तरपण्यम् । बृ० तृ० १६० आ ।

तरपन्नं–तारणमूल्यम् । नि० चू० द्वि० ७८ अ ।

तरमल्लिहायणा–तरो–वेगो बल वा तथा 'मल्लमल्लिधारणे' ततश्च तरो धारको वेगादिकृत् हायन–सवत्सरो वर्तते येषा ते तथा यौवनवन्त । भग० ४८० । ज० प्र० २६५ ।

तरमाण– । नि० चू० प्र० २६ अ ।

तरसि–शक्नोषि । आव० ३०५ ।

तरा–त्वरा–मानसोत्सुक्यम् । ज० प्र० ३८८ ।

तरामि–शक्नोमि । दश० ७६ ।

तरियव्वो–तरणीय । ज्ञाता० १६६ ।

तरी–तरिका–उडुप । पिण्ड० १०२ ।

तरुगणा–तरुगणा नालिकेर्यादारामा । दश० ११३ ।

तरुगणगणो–तरुगणगण –वृक्षगुच्छादिवृन्दसमूह । प्रश्न० २४ ।

तरुण–प्रवर्द्धमानवया । अनु० १७६ । नवम् । जावा० २७१ । प्रत्यग्र । ज्ञाता० २२२ । तरुण–उद्गच्छत् । ज० प्र० १८३ । तरुण–प्रवर्द्धमानवया विशिष्टवर्णादिगुणोपेतमभिनव वस्तुजातम् । जीवा० १२१ । यद् द्रव्य विशिष्टवर्णादिगुणोपेतमभिनव च तत्तरुणम् । राय० २२ । वर्धमानवया, वर्णादिगुणोपचित । उपा० ४६ । अवाक् चत्वारिंशतो वर्षेभ्य । व्य० प्र० २४५ । चत्ता सत्तरुणो । व्य० द्वि० ११२ आ । जन्मपर्यायेण षोडशवर्षाण्यारभ्य यावच्चत्वारिंशद्वर्षाणि तावत्तरुण । व्य० प्र० २४१ अ । तरुण–प्रथमकुमारत्वे वर्तमान । व्य० प्र० १४३ अ ।

तरुणइत्ते–तरुण युवा । दश० १०५ ।

तरुणग–अभिनवम् । भग० ६८४ । अहुणुट्ठिय । दश० चू० ८६ अ ।

तरुणदिवायरनयणो–तरुणदिवाकरनयन–रक्ताक्ष । आव० १६६ ।

तरुणधम्मो–तस्य तावन्त कालमसमापयन् तरुणधर्मा अविपक्वपर्याय । बृ० प्र० १२६ आ । जस्स वा सुत्तस्स जो कालो भणितो त अपूरेंतो तरुणधम्मो भवति । नि० चू० तृ० ८१ अ ।

तरुणा–तरुणा अभिनवा कोमलेति । अनुत्त० ४ ।

तरुणरहस-रोग । ओघ० ६४ ।
तरुणसहयरि-तरुणसहचरी-युवतिमयूरा । ज्ञाता० २६ ।
तरुणा-असञ्जाता । दश० १८५ ।
तरुणिमान'-तारुण्यम् । नदी० १६१ ।
तरुणी-अपरिपक्वा । आचा० ३२३ ।
तरुणीपडिकम्म- । ज्ञाता० ३८ ।
तरुणीपरिकम्म-तरुणीपरिकर्म युवतीनामङ्गसत्क्रिया वर्णादिवृद्धिरूपा । ज० प्र० १३८ ।
तरुपडणे-तरुपतनम् । ठाणा० ६३ ।
तरुपतनस्थानानि-यत्र मुमूर्षव एवानशनेन तरुवत्पतितास्तिष्ठन्ति तरुभ्यो वा यत्र पतन्ति । ठाणा० ।
तरोमल्लिन-बलाधायिनो वेगधायिनोवा । ज्ञाता० ५८ ।
तरोमल्लिहायणे-तरोमल्लिहायन तरोधारको-वेगादिधारको हायन संवत्सरो यस्य स यौवनवानिति । ज० प्र० २३० ।
तरोमल्लो-तरोधारक वेगादिकृत् । ज० प्र० २६५ ।
तर्कण-मनसा यदि मह्यमसौ ददातीति विकल्पनम् । उत्त० ५८७ ।
तर्कुक-वनीपक' । प्रश्न० १५४ ।
तर्कणवृत्तीनि- । ठाणा० ४२० ।
तर्णक- । उत्त० ३०५ ।
तप्पणालोडिकयेति-सत्त्वालोडनेन जलाद्यालोडितसक्तुभिरित्यर्थ । ठाणा० २६१ ।
तर्ष-तृष्णा । उत्त० १८३ ।
तल-रूपम् । औप० १६ । उपरितनो भाग । जीवा० १८६ । प्रतिष्ठानम् । प्रश्न० ६३ हस्तपुटम् । जीवा० २६६ । भूमिका । जीवा० १०३ । तालवृक्ष । अनु० १७७ । चुटिकाकाल । बृ० द्वि० ७ अ । हस्ततल । ज० प्र० ६३ । तल-तालवृक्ष । जीवा० १२२ । तल-हस्तक । जावा० १६० । तल-हस्ततल । जीवा० २१७ । तल-उपरितनो भाग । सूर्य० ६६ ।
तलउदाडा-गुच्छाविशेष । प्रज्ञा० ३२ ।
तलणं-तलनम् । प्रश्न० १४ ।
तलताला-हस्तताला । सूर्य० २६७ । ज्ञाता० २३३ । प्रश्न० १५६ ।

तलपत्त-तलपत्राणि-शालाभिधानवृक्षवर्णानि । ज्ञाता० २३१ ।
तलभगय-तलभङ्गकम् । औप० ५५ । तलभङ्गक-भूषणविधिविशेष । जावा० २६६ । तलभङ्गक-बाह्वाभरणम् । औप० ४६ । तलभङ्गक-बाह्वाभरणविशेष । प्रज्ञा० ६१ । जीवा० १६४ । तलभङ्गक-बाह्वाभरणम् । ज० प्र० १०६ ।
तलवर परितुष्टनरपतिप्रदत्तरत्नालङ्कृतसौवर्णपट्टविभूषितशिरा । अनु० २३ । परितुष्टनरपतिप्रदत्तपट्टबन्धभूषित । ठाणा० ४६३ । प्रभुस्थानीयो नगरादिचिन्तक । उत्त० ३४३ । तलवर-परितुष्टनरपतिप्रदत्तपट्टबन्धविभूषित राजस्थानीय । प्रज्ञा० ३२७ । भग० ३१८, ४६३ । तलवर-प्रतुष्टनरपतिवितीर्णपट्टबन्धविभूषितो राजस्थानीय । भग० ११५ । तलवर-सन्तुष्टनरपतिप्रदत्तसौवर्णपट्टालङ्कृतशिरस्कचौरादिशुद्धपधिकारी । ज० प्र० १२२ । तलवर-राजवल्लभ, राजसमान । अस्त० १६ । राजप्रतिमाचामरविहिनो तलवरो । नि० चू० प्र० २७० अ । तलवर-परितुष्टनरपतिप्रदत्तपट्टबन्धविभूषित । औप० १४ । तलवर-परितुष्टनरपतिवितीर्णपट्टबन्धविभूषित राजस्थानीय । औप० ५८ । तलवर-कृतपट्टबन्धराजस्थानीयः । प्रश्न० ६६ । तलवर-राजप्रसादवान् राजोत्थासनिक । विपा० ४० । तलवर-परितुष्टनरपतिप्रदत्तरत्नालङ्कृतसौवर्णपट्टविभूषितशिरा । जीवा० २८० । परितुष्टनरपतिदत्तसौवर्णतलवरपट्टालकृतशिरस्क । बृ० तृ० २५५ आ । राजवल्लभ । भग० ४६३ ।
तलवरा-तलवरा-परितुष्टनृपदत्तपट्टबन्धविभूषिता राजस्थानीया । ज० प्र० १६० । परितुष्टनरपतिप्रदत्तपट्टबन्धविभूषिता । राज० १२१ ।
तला-तली-हस्ततलो । जीवा० १६२ । प्रना० ८६ । हस्तका । प्रज्ञा० ८६ । सम० १३८ । ज० प्र० ७६ । औप० ५ । तल भूमिका । प्रज्ञा० ८० । हस्तताला । प्रश्न० १५६ ।
तलाग-तडाग । प्रश्न० ८ । तडाग-पुरुषादिकृतो जलाशयविशेष । प्रश्न० १३४ । तडाग-कृतको जलाशय-

विशेष । प्रश्न० १६१ । तडाग–खानितो जलाशयविशेष । अनु० १५९ ।
**तलागमह–** । आचा० ३२८ ।
**तलागाति–**तडागादीनि । ठाणा० ८६ ।
**तलानि–**मध्यखण्डानि । ठाणा० ४३५ ।
**तलाय–**तडागम् । प्रज्ञा० ७२ । तडाग–कृत्रिमजलाशयविशेष । भग० ३७३ ।
**तलाहणा–** । नि० चू० तृ० ८० अ ।
**तलिगा–**सोपानत्का उपानद्रूपादा । ओघ० ३५ । तलिका–चमपञ्चके प्रथमो भेद । आव० ६३२ ।
**तलिणो–**नलिन प्रतल । ओप० १६ । जीवा० २७२ । प्रश्न० ८१ ।
**तलिना–**सूक्ष्मा । बृ० प्र० ११३ अ
**तलिय** तल्प–शयनीय । नाता० २०५ ।
**तलिया–**उवाहणा । नि० चू० प्र० ६० अ । तलिका । ठाणा० २३४ । तलिका–उपानह । बृ० द्वि० १०१ अ । पात्रीविशेषा । भग० ५४८ ।
**तल्लग–**तल्लक–सुराविशेष । ज० प्र० १०० ।
**तल्लिच्छा–**तत्तद्विवक्षित वस्तु लब्धुमिच्छन इति तल्लिप्सु । ज्ञाता० ६८ ।
**तल्लेश्य–**प्रत्युपेक्षणाभिमुख । ओघ० ११६ ।
**तल्लेस–**तल्लेश्य कामध्वजा शुभात्मपरिणामविशेष । विपा०५३ । तल्लेश्य–तच्चित । ओघ०११७ । तल्लेश्य–भगवद्वचनगतशुभात्मपरिणामविशेष । लेश्यादि–कृष्णादि द्रव्यसाचिव्यजनित आत्मपरिणाम । ओप० ६० ।
**तव–**तप–अनशनादि । प्रश्न० १३२ । तप–उत्तराध्ययनेषु त्रिंशत्तममध्ययनम् । उत्त० ९ । तप–भद्रमहाभद्रादि । उत्त० १२८ । तपोमद–यत्तपसो मानम् । आव० ६४६ । तपस्त्यागयो सतो निर्वर्तितवान् । ज्ञाता० १२३ । ठाणा० २०० । तप–अनशनादिपूर्वकमनिर्जरणफलम् । प्रश्न० १०२ । तप–धर्मध्यानादि । सूर्य० ४ । तप–अनशनादि । सूय० ४ । ज० प्र० ५२२ । दश० ११० । तप–भक्तपरिज्ञानादिकमनशनम् । उत्त० ७०७ । तप–धर्मध्यानादि । भग० १२ । तप–पृथिव्यादिसघट्टनादौ निर्विग(कृ)तिकादि । आव० ७६४ । तप–ध्यानम् । ज्ञाता० ९ ।
**तवए–**तवक–सुकुमारिकादितलनभाजनम् । विपा० ५८ ।
**तवकरण–**तप करण तप कृति । आव० ४६६ ।
**तवग–**तापिका । प्रश्न० १४ ।
**तवणा–**तपन रविकरनिकरम तापरूपम् । उत्त० ५९६ ।
**तवणि–**घृतपात्रविशेष । ओप० ६६ ।
**तवणिज्ज–**तपनीय–आरक्त सुवर्णम् । ज० प्र० २४ । जीवा० १-१ १६४ । तपनीय–सुवर्णविशेष । सूय० २६४ । प्रज्ञा० ९९ । जीवा० २७३ १७५ । तपनीय रक्तसुवर्णम् । ज० प्र० ५४ ।
**तवणिज्जपट्ट–**तपनीयपट्ट–रक्तस्वर्णमयपट्टका लोके महल्ल इति प्रसिद्धौ । ज० प्र० २११ ।
**तवणिज्जमया–**तपनीयमयानि रक्तस्वर्णमयानि । ज० प्र० २८४ ।
**तवणिज्जुज्जलंबूसग–**तपनीयोज्ज्वललम्बूसकम् । आव० १२४ ।
**तवणीयपवरलंबूस–**लम्बसमुत्तदामम् । आचा० ४२३ ।
**तवति–**तपति–तप्तो भवति । जीवा० २४८ ।
**तवतेणे–**तपस्तेन–क्षपकरूपकल्प । दश० १८६ । तपस्तेन–परसम्बन्धि तप आत्मनि परप्रतिपत्तित सम्पादयै स्तपस्तेन । प्रश्न० १२५ ।
**तवतेयसिरी–**तपस्तेज श्री । आव० ७६३ ।
**तवनियम–**तपोनियमो–नियन्त्रित तप । सम० ११७ ।
**तवविणय–**तपोविनय–अपनयति तपसा तम–अज्ञान उपनयति च स्वर्ग मोक्ष च स विनय । दश० २४१ ।
**तवसंजमपडियार–**तप सयमप्रतिकार–तप सयमावेव प्रतिकार । आव० ५८६ ।
**तवसंजमो–**तप सयम तप प्रधान सयम । आव० ३२६ तप सयम–तप–अनशनादिस्तत्प्रधान सयम पञ्चाश्रवविरमणादि । उत्त० १४४ ।
**तवसमाही–**तप समाधि–तृतीय विनयसमाधिस्थानम् । दश० २५५ ।
**तवसा–**अनशनादिना । ज० प्र० १६ ।
**तवस्सी–**विकिट्ठतवकारी । नि० चू० प्र० १४ आ । अनशनादि विचित्रतपो युक्ता सामान्यसाधवो वा ।

ज्ञाता० १२३ । तपस्वी–उग्रतपश्चरणरत । दश० ३१ । तपस्वी–विकृष्टतपकः । दश० २०५ । तपस्वी तपोऽस्यास्तीति विकृष्टाष्टमादि तपोऽनुष्ठानवान् । उत्त० ८४ । तपस्वी निदानादिविरहिततया प्रशस्ततपोऽन्वित । उत्त० १८५ । करवीरलताभ्रामक कश्चित् । उत्त० २६५ । शिष्य । औप० ३३ । विशिष्टानशनादिलक्षण तपो विद्यते यस्य स सामान्यसाधुर्वा । आव० ११६ ।

तवाइसओ–तपोऽतिशय । दश० १०५ ।

तवारिहे–तपोऽर्हं–निर्विकृतादिक तप । औप० ४२ । निर्विकृतिकादि तल्लक्षणा शुद्धि यदर्हत्यतिचारजात तत्तपोऽर्हम् । भग० ९२० ।

तवेंति–तापयन्ति । सूर्य० ६१ । तपन्ति मन्दाङ्गारकल्पतां प्रतिपद्यन्ते । ज० प्र० ४१६ ।

तवेइ–तपति आनीतशीत करोति यथा वा सूक्ष्म पिपीलिकादि दृश्यते तथा करोति । भग० ७८ ।

तवोकम्म–तप कर्म । आव १८८ । तप कर्म–तपोऽनुष्ठानम् । दश० १६६ ।

तवोमग्गो– सम० ६४ ।

तवोवहाणे–तपउपधानं विशिष्टतपोविशेष । सूत्र० १४६ । तपउपधान–अनशनादिकम् । सू० प्र० २१५ आ । तपउपाधान–द्वादशविध तप । सम० १०७ ।

तव्व(च्च)णिगि–रक्तपटा । नि० चू० प्र० ७७ आ ।

तव्वइरित्तदसणे–तद्व्यतिरिक्तदर्शने अभिगृहीतमिथ्यादर्शनप्रत्ययिकीक्रियाया द्वितीयो भेद । आव० ६१२ ।

तव्वज्ज–तद्वर्जं बुद्बुदवर्ज–वर्षम् । आव० ७३३ ।

तव्वणिय–सुगत । विशे० ४८२ । रक्तपटलिङ्ग । आव० ६२८ । तद्वणिक, तच्चणिक–बौद्ध । आव० ६३६ ।

तव्वण्णिगिणो–तद्वणिको । आव० ६४० ।

तव्वण्णियसड्ढगा–तच्चनिकश्राद्धो । आव० ७६६ ८०० ।

तव्वत्थुए–तदव–परोप-न्यस्तसाधन वस्त्विति–उत्तरभूत वस्तु यस्मिन्नुप-न्यासोपनये स तद्वस्तुक । ठाणा० २५६ ।

तव्वत्थूपन्नास–तद्वस्तूपन्यास, उपन्यासस्य प्रथमो भेद । दश० ५५ ।

तव्वन्निए– । नि० चू० द्वि० ३३ अ ।

तव्विवरीए–यादृश वस्तु स्वप्ने दृष्ट तद्विपरीतस्यार्थस्य जागरण यत्र प्राप्ति स तद्विपरीतस्वप्नो यथा कश्चिदात्मनं मेध्यविलिप्त स्वप्ने पश्यति जागरितस्तु मेध्यमर्थं कश्चन प्राप्नोतीति । भग० ७०६ ।

तव्विहायरियविरहो–तद्विध सम्यगविपरीततत्त्वप्रतिपादनकुशल आचर्यतेऽस्माविरयाचार्य सूत्रार्थावगमार्थं मुमुक्षुभिरासेव्यत इत्यर्थ तस्य विरह–अभाव तद्विधाचार्यविरह । आव० ५६७ ।

तस–तस्य । उत्त० मा० गा० ४२४ ।

तसरेणु–त्रस्यति–पौरस्त्यादिवायुप्रेरितो गच्छति यो रेणु स त्रसरेणु । अनु० १६१ । पौरस्त्यादिवायुप्रेरितस्त्रस्यति गच्छतीति त्रसरेणु । ठाणा० ४३५ । त्रस्यति–पौरस्त्यादिवायुप्रेरितो गच्छति यो रेणु स त्रसरेणु । भग० २७७ । ज० प्र० ६४ ।

तसपाइया–त्रीन्द्रियजन्तुविशेष । जीवा० ३२ ।

तसा–त्रसा तेजोवायुद्वीन्द्रियादिका । सूत्र० १४५ । त्रसा–त्रसन्ति अभिसन्धिपूर्वकमनभिसन्धिपूर्वक वा ऊर्ध्वमधस्तिर्यक् चलन्तीति त्रसा–तेजोवायवो द्वीन्द्रियादयश्च । जीवा० ९ । तसा–त्रसन्ति–उष्णाद्यभितप्ता सन्तो विवक्षितस्थानादुद्विजन्ते गच्छन्ति च छायाद्यासेवार्थं स्थानान्तरमिति त्रसा–द्वीन्द्रियादयः । प्रज्ञा०४७४ । त्रस्यन्तीति त्रसा–चलनधर्माणि त्रसनामकर्मोदयवर्तित्वात् त्रसा । ठाणा० १३४ । त्रस्यन्ति–तापाद्युपतप्ता छायादिक प्रत्यभिसर्पन्तीति त्रसाः–द्वीन्द्रियादय । उत्त० २४४ । त्रसा–तेजोवायवो गतियोगात् त्रसा । ठाणा० १:४ ।

तसिए–शुष्क–आनन्दरसशोषात् । ज्ञाता० ६८ ।

तसिया–त्रसन त्रस्त–दु खादुद्वेजनम् । दश० १४१ । उद्विग्न । ज्ञाता० ६४ । भग० १६६ ।

तस्करावस्कन्द–चौरावपात । नदी० ६३ ।

तस्सन्नी–तस्य सज्ञा तत्सज्ञा–तज्ज्ञानम् । आचा० २१५ ।

तस्सामवड्ड–तस्या भवति । आव० २२५ ।

तस्सेवी–यमपराधमालोचयिष्यति तमेवासेवते यो गुरुः स तस्सेवी तस्मै यदालोचन तदपि तत्सेवीति । भग० ९१९ । य दोषा आलोचयितव्यास्तत्सेवी यो गुरुस्त-

स्य पुरतो यदालोचन स तत्सेविलक्षण आलोचनादोष । ठाणा० ४८४ ।

तह–तथा तथैव । भग० १२१ । सेवक सन् यथैवादिश्यते तथैव य प्रवर्तते स । ठाणा० २२४, २१४ ।

तहक्कार–सूत्रव्याख्यानादौ प्रस्तुते गुरुभि कस्मिंश्चिद् वचस्युदीरिते सति यथा भवन्ति प्रतिपादयन्ति तथैवेतदित्येव करण तथाकार–अविकल्पगुर्वाज्ञाभ्युपगम । अनु० १०३ । भग० ९२० । तथाकरण तथाकार, स च सूत्रप्रश्नादिगोचर, यथा भवद्भिरुक्त तथैवेदमित्येव स्वरूप वाचनाप्रतिश्रवणयो उपदेशे सूत्रार्थ कथने अवितथमेतदिति तथाकार, प्रतिश्रवणे च तथाकार । ठाणा० ४९९ ।

तहणाणे–यथा वस्तु तथा ज्ञान यस्य तत्तथाज्ञान सम्यग्दृष्टिजीवद्रव्य तस्यैवावितथज्ञानत्वात्, अथवा यथा तद्वस्तु तथैव ज्ञान–अवबोध प्रतीतिर्यस्मिस्तत्तथाज्ञानम्। ठाणा० ४८१ ।

तहत्ति–यथापूर्वसाधवो गृह्णन्ति । ओघ० १५५ ।

तहनाणे–यथा प्रच्छनीयार्थे प्रष्टव्यस्य ज्ञान तथैव प्रच्छकस्यापि ज्ञान यत्र प्रश्ने स तथाज्ञान ज्ञानप्रश्न । ठाणा० ३७६ ।

तहमेय–यद्भवद्भि: प्रतिपादित तत्तथैवेत्यर्थ । ज्ञाता० ४७ । आप्तवचनावगतपूर्वाभिमतप्रकारवत् । भग० ४६७ ।

तहा–तथाशब्द –अनुक्तसमुच्चयाय । उत्त० ५१५ । तथा निर्देशे । आव० ४६६ ।

तहाकारो–तथाकार –सूत्रप्रश्नगोचर यथा भवद्भिरुक्त तथेदमित्येवस्वरूप । आव० २५६ ।

तहाभाव–यथा वस्तु तथा भाव –अभिसन्धि यत्र ज्ञाने तत्तथाभाव, अथवा यथैव सवेद्यते तथैव भावो–बाह्य वस्तु यत्र तत्तथाभावम् । भग० ९९३ ।

तहामुत्ति–तथामूर्ति–कथञ्चित्तत्स्वरूपम् । दश० २१४ ।

तहारुव–तथारूप तथाविधिस्वभाव भक्तिदानोचितपात्रमित्यथ । भग० २२६ । तथारूप–उचितस्वभाव कञ्चनपुरुष श्रमणा वा तपोयुक्तः । उपलक्षणत्वादस्योत्तरगुणवानित्यर्थ । भग० १४१ ।

तहारुव–तथारूप सङ्गतरूपम् । भग० १५५ ।

तहारुवा–तत्प्रकारस्वभावा –महाफलजननस्वभावा । निरय० ७ ।

तहिंगोलं– । नि० चू० २२ अ ।

तहिंतहिं–तत्र यत्र देशे एक । जीवा० १८१ । तस्यैव देशस्य तत्र तत्रैकदेशे । ज० प्र० ४४ ।

तहिए–तथ्या –सत्या । ज्ञाता० १७७ ।

तहिया–तथ्या –अवितथा निरुपचरितवृत्तय । उत्त० ५९२ ।

ता–तावत्–क्रमार्थे । सूर्य० ९ ।

ताइ–त्राता–आत्माराम साधु । दश० २०९ ।

ताइणं–तायिना त्रायिणा वा । उत्त० ४१९ ।

ताई–तायी त्रायी वा । उत्त० ३५३ । तायी वा त्रायी-मोक्षम् । भगवान् सर्वस्य परित्राणशील. । सूत्र० ३९४ ।

ताए–ताय सुदृष्टमार्गोक्ति । दश० २६२ ।

ताओ–तातेत्यामन्त्रणम् । ज्ञाता० ३४ ।

ताडणं–ताडन उर शिर कुट्टनकेशलुञ्चनादि । आव० ५८७ ।

ताडनं–वध । आव० ५८८ ।

ताडिओ–ताडित –आहत । उत्त० ४६१ ।

ताण–त्राण–बन्धुभि पालन अरातो वा रक्षणम् । उत्त० १९३ । त्राण–स्वकृतकर्मणो रक्षणम् । उत्त० । २२१ । तान –तानक । भग० ५४२ । आव० ६६१ ।

तात्पर्य–आसेवा विदितकर्मपरिणामो विदध्यात् । आचा० ११८ ।

तान–तता तन्त्री तानो भण्यते । ठाणा० ३९७ । अनु० १३३ ।

ताप–सविता । ठाणा० १३३ । तपतीति ताप इह सविता । विशे० १०७४ ।

तापक्षेत्र–उदयास्तान्तर, प्रकाशक्षेत्रम् । ज० प्र० ४५५ । उदयास्तान्तरम् । ज० प्र० ४४२ ।

तापिका–कटकद्वितयोपेता लोहस्थाली (तवो) । भग० ८५ ।

तापोदक–राजगृहनगरभाविस्वभावादेवोष्ण ।

तामरसे–जलरुहविशेष । प्रज्ञा० ३३ ।

तामलि–तापसविशेष । उत्त० ६८ । भग० ५१४ ।

तामलित्त–ताम्रलिप्त –ईशानेन्द्रस्य वैक्रियरूपकरणादिसामर्थ्योपदर्शने बालतपस्वी । भग० १६४ ।
तामलित्तग–तामलित्तिक सैन्धव । व्य० द्वि० ३०४ अ ।
तामलित्ती–सिन्धुसौवीरदेशे नगरी । बृ० द्वि० २२६ आ । वङ्गेषु ताम्रलिप्ती आर्यक्षत्रम् । प्रज्ञा० ५५ । ताम्रलिप्ती–ईशानेन्द्रस्य वैक्रियरूपकरणादिसामर्थ्योपदर्शकतापसनगरी । भग० १६१ ।
तामली–तामलिप्तनगर्यां गाथापति । भग० १६१ ।
तामसबाणा–य पर्यन्ते सकलसग्रामभूमिव्यापि महान्धतमसरूपतया परिणमन्ते । जीवा० २८३ । सकलसग्रामभूमिव्यापि महान्धमरूपतया परिणता प्रतिवैरिवाहिनीषु विघ्नोत्पादका भवन्ति । ज० प्र० १२५ ।
ताम्रलिप्तिः–नगरविशेष । उत्त० ६०५ ।
तायओ–तायते–सन्तान करोति पालयति च सर्वापद्भ्य इति तात –स एव तातक । उत्त० ३२८ ।
तायत्तीस–त्रायस्त्रिंश महत्तरकल्प पूज्यस्थानीय । औप० ५३ ।
तायत्तीसए–त्रायस्त्रिंशक गुरुस्थानीया देवा । ज० प्र० १५६ ।
तायत्तीसगा–त्रायस्त्रिंशा मन्त्रिविकल्पा । भग० ५०२ । मन्त्रिकल्पा । भग० १५४ । महत्तरकल्पा पूज्या । ठाणा० ११७ ।
तायत्तीसा–त्रायस्त्रिंशा पूज्या महत्तरकल्पा । उपा० २७ ।
तार–तारा तारका अथचन्द्रा । ज० प्र० २११ ।
तारए–ससारसागरमिति गम्यते तेन तथा तारयति परान्प्युपदेशवर्तिन इति तारक । सम० ५ ।
तारओ–तारक –अन्यास्तारयतीति । जीवा० २५६ ।
तारगा–पूर्णभद्रयक्षन्द्रस्य चतुर्थी अग्रमहिषी । ठाणा० २०४ ।
तार(य)ग्ग–ताराग्र तारापरिमाणमभिधेयम् । सूर्य० ९ ।
तारग्गहा–तारकाकाराग्रहा तारकग्रहा । ठाणा० ३५५ ।
तारय–तारक –द्विपृष्ठवासुदेवशत्रु । आव० १५९ ।
तारया–पतेन्द्रस्य चतुर्थी अग्रमहिषी । भग० ५०४ ।
तारा–तारा –ज्योतिष्कभेदविशेष । प्रज्ञा० ६९ । तारा अश्विन्यादिनक्षत्राणि । सूत्र० ४०२ । सुभूममाता । आव० १६१ । कार्त्तवीर्यपत्नी । आव० ३९२ । ज्योतिष्कविमानानि अधिकारात्तन्नत्रजातीयज्योतिष्काना विमानानीत्यर्थ । ज० प्र० ४६६ । ज्योतिर्विमानरूपा । ठाणा० ३६ । भग० १६५ । भरतक्षेत्रे सप्तमचक्रवर्त्तिमातृनाम । सम० १५२ ।
ताराइणे– । निरय० ३६ ।
तारारूपाणि–तारका एव । सम० १४० ।
तारारूव–तारारूप–तारकजातीयम् । सम० १६ । ठाणा० ४४८ । तारारूपा –तारिकारूपा । ज० प्र० २६२ । तारकमात्रम् । ठाणा० ११५ । तारारूप तारिकारूप । जीवा० १९९ ।
तारावलि–पञ्चमनाट्यभेद । ज० प्र० ४१६ ।
तारूवत्ता–तद्रूपता–नीललेश्यास्वभाव । भग० २०५ ।
ताल–तालाभिधान एक । भग० ३६६ । कशिकादिशब्दविशेष । ठाणा० ३१६ । वृक्षविशेष । ठाणा० १८५ ५०० । हस्तताल । ठाणा० ६३ । हस्तताला समुत्थ उपचाराच्छब्द । अनु० १३२ । तालवृक्षफलविशेष । बृ० प्र० १३५ आ । ताल –हस्ततमः । दश० ८८ । ताड । भग० ८०३ । कशिका । ज० प्र० ६३ । गीतादिमानकाल । ज० प्र० १३७ । ताल –घनवाद्यविशेष । ज० प्र० २०६ । वलयविशेषः । प्रज्ञा० ३३ । ताल । जीवा० २६६ । कसिका । जीवा० १६२, २१७ । प्रज्ञा० ८६ ।
तालउडं–तालपुट तालमात्रव्यापात्तिकरविषकल्पमहितमिति । विषविशेष । दश० २३७ । ज्ञाता० १६० ।
तालए–आवत्तणपेढियाए । नि० चू० तृ० ५६ आ ।
तालजघ–तालो वृक्षविशेष स च दीर्घस्कन्धो भवति ततस्तालवज्जङ्घे यस्य तत् । ज्ञाता० १३७ ।
तालणा–ताडना चपेटादिदानानि । औप० १०३ । चपेटादिदानम् । प्रश्न० १०६ । ताडना–करादिभिराहननम् । उत्त० ४२६ ।
तालतोयाणि–तालतोयानि । बृ० द्वि० १७३ अ ।
तालन–चपेटादिना हननम् । औप० १०७ ।
तालपलब–फलविशेष । आचा० ३४८ । तालप्रलम्ब ।

भग० ३६६ ।

**तालपिशाच**-पिशाचविशेष । ठाणा० ५०२ । पिशाच भेदविशेष । प्रज्ञा० ७० ।

**तालपिसाय**-तालवृक्षाकारोऽतिदीर्घत्वेन पिशाच ताल पिशाच । ज्ञाता० १८७ ।

**तालपुट**-विषविशेष । उत्त० ३१८ । सद्यो घाति यन्नो- ष्ठपुटान्तर्वर्त्तिनि तालमात्रकालविलम्बतो मृत्युरुपजायते तत् । उत्त० ४२६ ।

**तालपुड**-तालपुट विषविशेष । आव० ३७४ । जेण ताला मपुडिज्जइ तेण भरेण मारयतीति । दश० चू० १२७ अ ।

**तालफल**-प्रलम्ब फलविशेष । दश० १७६ ।

**तालबेंट**-तालपत्रशाखेरयर्थ । नि० चू० प्र० ६० आ ।

**तालमत्यकड**- । भग० ४३६ ।

**तालयट**-तालवृन्त-वायूदीरकमेव द्विपुटादि । प्रश्न० ८ ।

**तालवट**-तालवृन्त तालाभिधानवृक्षपत्रवृन्त पत्तछोट इत्यर्थ । ज्ञाता० ४८ ।

**तालवुंत**-वीजनकम् । उत्त० ६० । व्यजनम् । ज० प्र० ४११ ।

**तालवेंट**-तालवृन्त विद्याविशेष । व्य० द्वि० १३३ आ । भग० ४७४ ।

**तालसम**-नट्टविशेष । नि० चू० तृ० १ अ । यत्परस्परा- हतहस्ततालस्वरानुवर्ति भवति तत् तालसमम् । ठाणा० ३९६ । यत्परम्पराभिहतहस्ततालस्वरानुसारिणा स्वरेण गीयते तत् । अनु० १३२ ।

**तालसुसपउत्तं**-परस्पराहतहस्ततालस्वरानुवर्ति यद् गीत तत्,यत् मुरजकंसिकादीनामातोद्यानामाहतानां यो ध्वनिर्यश्च नृत्यन्त्या नर्तक्या पादोत्क्षेपस्तेन सम तत् तालसुसप्रयु- क्तम् । ज० प्र० ४० । तालसुसप्रयुक्त-परस्पराहतहस्तता लस्वरानुवर्ति यद् गीत तत् । यत् मुरजकंसिकादीनामा- तोद्यानामाहतानां यो ध्वनिर्यश्च नृत्यन्त्या नर्तक्या पादोत्क्षेपस्तेन सम तद्वा । जीवा० १९५ ।

**ताला**-कशिरा । प्रश्न० १५६ ।

**तालाचरा**-तालाद्यादिभि विद्याविशेषै चरन्ति तालाचरा । नि० चू० द्वि० १६७ आ । तालादानेन प्रक्षाकारिण । राज० २ । ज्ञाता० ४० । प्रक्षाकारी । विपा० ६३ ।

**तालाद्यादि**-विद्याविशेष । नि० चू० द्वि० १६७ आ ।

**तालायर**-तालाचर-तालादानेन प्रेक्षाकारी । औप० ३ । तालाचरा नटा । बृ० प्र० १०३ अ । तालाचर ताला- दानेन प्रक्षाकारी दण्डपाशिको वा । औप० ७२ । ताला चर प्रेक्षाकारिविशेष । प्रश्न० १४१ ।

**तालायरा**-तालाचरा प्रेक्षाकारिविशेष । ज० प्र० ११४ । चारणा । ओघ० २२३ । नर्तकवद्वाद्य । बृ० द्वि० २७३ आ । भडचेडणडादिया । नि० चू० प्र० ३५८ अ ।

**तालिअंटे**-तालवृन्त व्यजनविशेष । दश० १५४, २२८ । ज० प्र० ११६ ।

**तालिज्जताणं**-ताडनम् । राज० ५२ ।

**तालियंट**-तालवृन्त मयूरपिच्छकृतव्यजनमित्यर्थ । आचा० ३४५ । तालाभिधानवृक्षपत्र वृन्त तत्पत्रच्छोट इत्यर्थ । भग० ४६८ । तालवृन्त-व्यजनकम् । आव० १२२ । तालवृन्त-वीजनकम् । प्रश्न० १६३ ।

**तालियटक**-तालवृन्तक व्यजनविशेष । प्रश्न० १५२ ।

**तालु**-काकुदम् । जीवा० २७३ । काकुन्दम् । ज्ञाता० १३८ । आचा० ३८ ।

**तालुगागारो**- । ओघ० २०६ ।

**तालुग्घाडणीए**-विद्याविशेष । नि० चू० प्र० ७६ अ ।

**तालेइ**-ताडयति हस्तादिना । भग० १६६ ।

**तालोदग**- । नि० चू० तृ० १५ आ ।

**तालोदा**-तालोदकानि । बृ० द्वि० १७३ अ ।

**ताव**-तावत् । ठाणा ४६७ । ताप-आतापनामकर्मोदया- द्रविमण्डलानामुष्ण प्रकाश । ज० प्र० ४३३ ।

**तावखित्त**-तापक्षत्र सूर्यातपव्याप्ताकाशखण्डम् । ज० प्र० ४५३ ।

**तावखेत्तपुव्व**-तापक्षत्रपूर्वं आदित्योदयमधिकृत्य यत्र या पूर्वादिक । दश० ८५ ।

**तावणिज्ज**-तापनीय-तापनहम् । भग० ६७२ ।

**तावण्णत्ता**-तस्या इव नीललेश्या इव वर्णो यस्या सा तद्वर्णा तद्भावस्तत्ता तद्वर्णता । भग० २०५ ।

**तावस**-तवेट्ठिओ । दश० चू० ३३ आ । तापस-वौता-

न्या श्रेष्ठिविशेष । उत्त० ६६ । तापस –परिशटित-पत्राद्युपभोगवान् बालतपस्वी । प्रज्ञा० ४०५ । पतित-पत्राद्युपभोगवान् बालतपस्वी । भग० ५० ।

तावसपल्लि–तापसपल्ली । आव० ३६१ ।

तावता–भिक्षुविशेष । नि० चू० द्वि० ६८ अ ।

ताविया–तापिका । आव० ८५४ ।

तावेइ–तापयति आनीतशीत करोति । जं० प्र० ४११ । नि० चू० तृ० १५ अ ।

तासण–त्रासन फेत्काराविवचन भयकारि । प्रश्न० १६० ।

तासणओ–त्रास आकस्मिक भय अकस्मोत्पन्नशरीरकम्प-मन क्षाभादिलिङ्गितरकारकत्वात् त्रासनक । प्रश्न० ५ ।

ताहे–तदा तस्मिन् काले । ओघ० ११५ ।

तिंता–उल्ला । नि० चू० प्र० ४६ अ । मिन्ना विलग्ना आर्द्रा । दश० ६६ ।

तिंतिण–सखेद वचनम् । भग० ११६ ।

तिंतिणि–तिंतिणी यत्र तत्र वा स्तोकेऽपि कारणे कर-करायण । व्य० प्र० २३० अ ।

तिंतिणिए–तिंतिणिकोऽलाभे सति खेदाद् यत् किञ्चनाभि-धायी । ठाणा० ३७४ ।

तिंतो–क्लिन्न । नि० चू० द्वि० ८१ आ ।

तिंबुका– उत्त० ५७१ ।

तिंदुग–एकादशतीर्थकरस्य चैत्यवृक्षनाम । सम० १५२ । तिन्दुक–त्रीन्द्रियजीवविशेष । उत्त० ६९५ । तैन्दुक श्रावस्त्यामुद्यानम् । विशे० ६३५ ।

तिंदुगुज्जाण–तिन्दुकोद्यान श्रावस्त्यामुद्यानविशेष । उत्त० १५३ ।

तिंदुय–तिन्दुक तैंदुरुकीफलम् । दश० १७६ । प्रज्ञा० १६४ । तिन्दुक श्रावस्त्यामुद्यानविशेष । उत्त० ४९८ । फलविशेष । प्रज्ञा० ३७ ३२८ । वनस्पतिविशेष । भग० ८०३ ।

तिंदुसय–तेन्दूसक । आव० १८१ । ज्ञाता० १८४ ।

ति–तृतीया सप्तरात्रिकी । आव० ६४७ ।

तिअ–त्रिक–कटिमाग । उत्त० ४७४ ।

तिउट्टई–त्रुट्यति क्षपयत्यति । आचा० २६० ।

तिउड–त्रिकूटनामवक्षस्कारपर्वत । जं० प्र० ३५२ ।

तिउडग–त्रिपुटका धान्यविशेष । दश० १९३ ।

तिउण–त्रिगुण त्रि प्रदक्षिणीकृत्य । आव० २३३ ।

तिउल–त्रीन् मन प्रभृतीन्–तुलयति तुलामारोपयति कष्टा-वस्थीकरोतीति त्रितुलम् । प्रश्न० १५६ । तोदकः व्यथक । उत्त० ४७५ ।

तिउला–त्रीन् मनोवाक्कायास्तुलयति अभिभवति या सा त्रितुला । प्रश्न० १७ । त्रीनपि मनोवाक्कायल-क्षणान्-योगांस्तुलयति जयति तुलाद्धानिव वा करोति त्रितुला । ज्ञाता० ६८ ।

तिकट्टु–इतिकृत्वा । आव० ७९३ ।

तिकडुय–त्रिकटुकं शुण्ठीमरिचपिप्पल्यात्मकम् । उत्त० ६५३ ।

तिकणइयाइ–नयत्रिकाभिप्रायाच्चिन्त्यन्ते यानि तानि नय-त्रिकवन्तीति त्रिकनयिकानि । सम० ४२ ।

तिकूडा–शीतामहानद्या दक्षिणतटे स्थित वक्षस्कार-पर्वतविशेष । ठाणा० ८० ।

तिकूडे– । ठाणा० ३२६ ।

तिक्ख–तीक्ष्णा भेदिका । भग० ५४० । तीक्ष्ण–कटु । उत्त० ६५३ । तीक्ष्णा वेगवती । भग० ३०६ । तीक्ष्णा छेदकरणात्मकम् । दश० २०१ । तीक्ष्णा निशिता । उत्त० ३४६ ।

तिक्खदाढ–तीक्ष्णा निशिता दंष्ट्रा एव यस्य स तीक्ष्ण दंष्ट्र । उत्त० ३४६ ।

तिक्खसिंगे–तीक्ष्णे निशिताग्रे शृङ्गे विषाणे यस्य स तीक्ष्णशृङ्ग । उत्त० ३४६ ।

तिक्खा–परुषा । भग० ७६७ ।

तिक्खुत्तो–त्रिकृत्व । आव० १२४, ३२६ । त्रीन् वारान् त्रिकृत्वा । भग० १४ ।

तिखुत्तो–तिण्णिवारा । नि० चू० प्र० २१८ अ ।

तिग–त्रिक यत्र रथ्यात्रय मिलति । औप० ४ । त्रिकम् । आव० १३६ । त्रिक यत्र स्थाने रथ्यात्रयमीलको भवति । औप० ५० । त्रिक–रथ्यात्रयमीलनस्थानम् । भग० १३७, २००, २३८ । त्रिक –जीवाजीवनोजीवराशित्रयं तदभ्यु-पगन्तरोऽपि तथैव त्रिका । उत्त० १५२ । त्रैराशिक-राशित्रयस्थापक । आव० ३११ । त्रिक–त्रिपदसमा-

गम । अनु० १५६ । यत्र रथ्यानां त्रयं मिलति । ठाणा० २९४ । कटिभागम् । उत्त० ४७५ ।

**तिगडुगाईयं**–त्रिकटुकादिकं सुण्ठीपिप्पलीमरिचकादिकम् । पिण्ड० ६५ ।

**तिगपरिहीणो**–त्रिकेण ज्ञानदर्शनचारित्रलक्षणेन हीनः । ओघ० १७३ ।

**तिगिंछि**–किंजल्क । ठाणा० ४८२ ।

**तिगिंछिकूडे**–तिगिंछी–किंजल्कस्तत्प्रधानकूटत्वात्तिगिंच्छि-कूटं । ठाणा० ४८२ ।

**तिगिंछी**– । ठाणा० ७३ ।

**तिगिच्छ**–विमानविशेषः । सम० ३८ । चिकित्सा । ज्ञाता० ११३ । आव० ३४८ ।

**तिगिच्छकूडे**–उत्पातपर्वतः । भग० १७२ ।

**तिगिच्छा**–रोगप्रतिकारः । नि० चू० द्वि० ६१ आ । रोगप्रतीकारः । पिण्ड० १२१, १३२ । चिकित्सा । व्य० द्वि० ११५ अ । मतिविभ्रमः । आव० ८१५ । प्रश्न० १० ।

**तिगिच्छायणसगोत्ते**–ज्येष्ठागोत्रनाम् । सूर्य० १५० ।

**तिगिच्छायणे**–चिकित्सायनं–ज्येष्ठागोत्रम् । जं० प्र० ५०० ।

**तिगिञ्छि**–प्राकृते पुष्परजःशब्दस्य तिगिंछि इति निपातः देशी शब्दो वा । जं० प्र० ३०७ ।

**तिगिञ्छिकूट**–शिखरिणिवर्षधरे एकादशकूटनाम । ठाणा० ७२ । उत्पातपर्वतः । प्रश्न० ६६ । उत्पातपर्वतः । ठाणा० ३७६ । चमरेन्द्रस्य उत्पातपर्वतनाम । ठाणा० ४८२ । सम० ३३ । तिगिञ्छिद्रहपतिकूटम् । जं० प्र० ३६१ ।

**तिगिञ्छिद्दह**–तिगिंछि पौष्परजस्तत्प्रधानो द्रहस्तिगिंछि-द्रहो नाम द्रहः । जं० प्र० ३०६ ।

**तिगिञ्छिते**–चैकित्सिक आयुर्वेदः । ठाणा० ४५१ ।

**तिगिच्छी**–नगरीविशेषः जितशत्रुराजधानी । विपा० ६५ ।

**तिगुण**–त्रिर्वाराः । ओघ० ११७ ।

**तिगुणुक्कडो**–त्रिगुणं त्रीन् वारान् यावत् उत्–प्राबल्येन कण्डनं–छटनं यस्य स त्रिगुणोत्कण्टः । पिण्ड० ६५ ।

**तिघरंतर**–गृहत्रयात्परतः तृतीयान्तरात्परतः । नि० चू० प्र० १८७ अ ।

**तिचक्खु**–त्रिचक्षुः उत्पन्नावरणक्षयोपशमेन ज्ञानं च श्रुतावधिरूपं दर्शनं च अवधिदर्शनरूपं यो धारयति वहति स तथा य एवंभूतः स चक्षुरिन्द्रियपरमश्रुतावधि-भिरिति वक्तव्यं स्यात् । ठाणा० १७१ ।

**तिजमलपदं**–त्रयाणां यमलपदानां समाहारस्त्रियमलपदम्, चतुर्विंशत्यङ्कस्थानलक्षणं अथवा तृतीयं यमलपदं षोडशा-नामङ्कस्थानानामुपरितनाङ्काष्टकलक्षणमिति वर्गपदकल-क्षणम् । अनु० २०६ ।

**तिट्ठइ**–तिष्ठति वर्त्तते आसेवते । दश० २४३ ।

**तिट्ठाण**–तिस्रो वाराः । ओघ० १६३ । मणिबद्धहस्त-तलभूमिकात्रलक्षणम् । बृ० १०७ अ । तिस्रो वाराः आ । आव० ६४२ ।

**तिट्ठाणकरणसुद्ध**–त्रीणि स्थानानि उरःप्रभृतीनि तेषु कर-णेन क्रियया शुद्धं त्रिस्थानकरणशुद्धम् । जीवा० १९५ । त्रीणि स्थानानि उरःप्रभृतीनि तेषु करणेन क्रियया विशुद्धम् । अथवा उरःकण्ठशिरस्सु श्लेष्मणा अव्याकु-लेषु विशुद्धेषु प्रशस्तेषु यद्गीयते तदुरःकण्ठशिरोविशुद्ध-त्वात् त्रिस्थानकरणविशुद्धम् । जं० प्र० ४० ।

**तिट्ठाणकरणसुद्धा**–त्रिस्थानकरणशुद्धा -आदिमध्यावसान-रूपेषु त्रिषु स्थानेषु करणेन क्रियया यथोक्तवाहनक्रियया शुद्धा अवदाता न पुनरवस्थानव्यापारणरूपदोषलेशेनापि कलङ्किता । जीवा० २६६ ।

**तिणय**–त्रिनतं मध्यपार्श्वद्वयलक्षणे स्थानत्रयेऽवनतम् । भग० १६४ ।

**तिणहत्थय**–तृणपूलकः । भग० ६८४ ।

**तिणिस**–तिनिशाभिधानतरुसम्बन्धि । भग० ८८१ । तिनिशः वृक्षविशेषः । ठाणा० २१९ । तैनिशं तिनिशदारु-सम्बन्धि । जीवा० १६२ । तिनिशद्रुमसम्बन्धि । जं० प्र० ३७ । वृक्षविशेषः । नि० चू० प्र० १४४ आ । तिनिशः वृक्षविशेषः । दश० २३९ । उत्त० १७ ।

**तिण्ण**–तीर्णः भवार्णवं स्वयमवतरितः । जीवा० २५६ । तीर्णः शक्तः । आव० ६१७ । तीर्ण इव तीर्णः । सम० ४ ।

**तितिक्खइ**–तितिक्षते दैन्याभावात् क्षमेण वा मनःप्रभृति-भिः । भग० ४९८ ।

**तितिक्खया**–तितिक्षार्थं सहनार्थम् । ओघ० १६० ।

**तितिक्खसि**-तितक्षसे दैन्यावलम्बनेन । ज्ञाता० ७१ ।
**तितिक्खा**-तितिक्षा परीषहजय । प्रश्न० १४६। तितिक्षा परीषहजय, योगसंग्रहे नवमो योग । आव० ६६४ ।
**तितिक्खेमि**-तितिक्षामि । ठाणा० २४७ ।
**तित्त**-तिक्त कोसातक्यादिवत् । उत्त० ६७६ । श्लेष्म नाशकृत् तिक्त । ठाणा० २६ । तिक्त-यदुदयात् जन्तुशरीरेषु तिक्तो रसो भवति यथा मरिचादीनां ति क्तरसनाम । प्रज्ञा० ४७३ ।
**तित्तगं**- । नि० चू० प्र० ११५ अ । तित्तक एलुकवालुङ्कादि । दश० १८० ।
**तित्तालाउय**-कटुकतुम्बकम् । ज्ञाता० १११ ।
**तित्तिय**-तित्तिक चिलातदेशनिवासो म्लेच्छविशेष । प्रश्न० १४ ।
**तित्तिर**-तित्तिर पक्षिविशेष । प्रश्न० ८ ।
**तित्तिरा**-लोमपक्षिविशेष । जीवा० ४१ । प्रज्ञा० ४९ ।
**तित्ती**-तृप्ति तृप्तहेतुत्वात्तृप्ति अहिंसाया दशम नाम । प्रश्न० ९९ । तृप्ति प्राणि । ठाणा० १३ । प्राणि, बुभुक्षा-क्षुपरमलक्षणा । विशे० १३६ ।
**तित्थकरो**-तीर्थकर जिन प्रशस्तभावकरविशेष । आव० ४९६ ।
**तित्थ**-यद् यस्मात् तारयति पार प्रापयति तेन तत् सपलक्ष ण भावतस्तीर्थम् । विशे० ४७६ । जन्मजरामरणसलिलसम्भृत मिथ्यादर्शनाविरतिगम्भीर महाभीमकषायपाताल दुरवगाहमहामोहावर्त्तभीषण रागद्वेषपवनविक्षोभित विविधानिष्टेष्टसयोगवियोगवीचीनिचयसङ्कुल उच्चैस्तरमनोरथसहस्रवेलाकलितं ससारसागर तरन्ति येन तत्तीर्थं । सकलजीवाजीवादिपदार्थसार्थप्ररूपक अत्यन्तानवद्य शेषतीर्थान्तरीयाविज्ञातचरणकरणक्रियाधार सकलत्रैलोक्यान्तर्गतविशुद्धधर्मसंपत्समन्वितमहापुरुषाश्रयमविसवादि प्रवच नम् । नदी० २१ । तीर्यतेऽनेनेति तीर्थम् । ठाणा० ३२ । तीर्थ-घट्ट न । जं० प्र० २०० । तीर्थं तीर्यतेऽनेनेति तीर्थं सङ्घ । विशे० ५६१ । तीर्थं तीर्यतेऽनेनेति प्रवचन सङ्घो वा । आव० ८६ । तीर्यते ससारसागरो ऽनेनेति तीर्थं यथावस्थितसकलजीवाजीवादिपदार्थसार्थप्ररूपकं परमगुरुप्रणीत प्रवचनम्, तच्च निराधार न भवति इति सङ्घ प्रथमगणधरो वा । प्रज्ञा० १६ । त्रिषु वा क्रोधाग्निदाहोपशमलोभतृष्णानिरासकर्ममलापनयनलक्ष णेषु ज्ञानादिलक्षणेषु वा अर्थेषु तिष्ठतीति त्रिस्थम् । ठाणा० ३३ । तीर्थं पवित्रताहेतु, तरणोपायश्च । प्रश्न० १३६ । प्रश्न० १३६ । तीर्थभूतदेवद्रोण्यादि । ज्ञाता० ८१ । तीर्थम् चातुर्वर्ण श्रमणसङ्घ । आव० १३४ । तीर्थं गणधर । आव० २३३ । तीर्थं वा गणधर । आव० २८७ । तरन्ति तेन ससारसागरमिति तीर्थं प्रवचनम् सङ्घ । भग० ७ । चाउवण्णो समणसघो दुवालसगं वा गणिपिडग । नि० चू० प्र० ७७ अ । तीर्थम् त्रिस्थम् त्र्यर्थ वा, जन तीर्थमभिप्रेतार्थसाधकम् । विशे० ४८१ । यद् यस्माद् यथोक्तदाहोपशमतृष्णाच्छेदमलक्षालनरूपेषु यदि वा सम्यग्दर्शन ज्ञानचारित्रलक्षणेषु त्रिष्वर्थेषु स्थित ततस्त्रिस्थ सघ एव । विशे० ४८० । तीर्थ-क्रोधाग्निदाहोपशम-लोभतृष्णाव्यवच्छेद-कर्ममलक्षालनलक्षणास्त एवानन्तरोक्तास्त्रयोऽर्था फलरूपा यस्य तत् त्र्यर्थं तच्च सघ, तद-व्यतिरिक्त ज्ञानादि त्रय वा त्र्यर्थं प्राकृते 'तित्थ' उच्यते। विशे० ४८० । तरन्ति येन ससारसागरमिति तीर्थं प्रवचन सङ्घ । सम० ३ । पुण्यक्षेत्रम् । उत्त० ३७३ । गणधर प्रवचण श्रुतमित्यर्थं । उत्त० ५८४ । तीर्यते ससारसागरोऽनेनेति तीर्थं-यथावस्थितसकलजीवाजीवादि-पदार्थसार्थप्ररूपक परमगुरुप्रणीत प्रवचन सङ्घ प्रथमगणधरो वा । नदी० १३० । त्रयो वा क्रोधाग्निदाहोपशमादयोर्था कलानि यस्य तत् त्र्यर्थम् त्रयो-ज्ञानदयोर्था वस्तूनि यस्य तत् त्र्यर्थम् । ठाणा ३३ । जीवाजीवादिपदार्थसार्थ-अत्यन्तानवद्यशेषतीर्थान्तरीया-विज्ञातचरणकरणक्रियाधार त्रैलोक्यान्तर्गतविशुद्धधर्म-सम्पत्समन्वितमहापुरुषाश्रयं अविसवादि प्रवचन च । तीर्थं श्रुतज्ञानम् । आव० २३५ । तीर्यते ससारसमुद्रोऽनेनेति तीर्थं प्रवचनम् । राज० १०६ ।
**तित्थगर**-तीर्थं-प्रवचन तदव्यतिरेकाच्चेह सङ्घस्तीर्थं तत्करणशीलत्वात् तीर्थकर । भग० ७ । तीर्थकर तीर्यते ससारसारसमुद्रोऽनेनेति तीर्थं तत्करणशील । जीवा० २५५ । तरन्ति येन ससारसागरमिति तीर्थं

प्रवचन तदव्यतिरेकादिह सङ्घस्तीर्थं तस्य करणशील-त्वात्तीर्थंकरः । सम० ३ । तीर्थकर द्वादशाङ्गप्रणायकः । प्रश्न० १०४ ।

**तित्थगरनाम**–यदुदयवशात् अष्टमहाप्रातिहार्यप्रमुखाश्चतुस्त्रिंशदतिशया प्रादुष्यन्ति तत् तीर्थकरनाम । प्रज्ञा० ४७५ ।

**तीर्थकरनामगोत्रं**–तीर्थकरत्वनिबन्धनं नाम तीर्थकरनाम तच्च गोत्रं च–कर्मविशेष एवेत्येकवद्भावात् तीर्थकरनामेति गोत्र–अभिधान यस्य तत् । ठाणा० ४५५ ।

**तित्थगरपडिरूवं**–तीर्थकरप्रतिरूपम् । आव० १२४ ।

**तित्थण्हायतो**– । नि० चू० द्वि० १०१ अ ।

**तित्थधम्म**–तीर्थमिह गणधरस्तस्य धर्मः–आचार श्रुतधर्मप्रदानलक्षणस्तीर्थधर्म, यदि वा तीर्थं प्रवचन श्रुतमित्यर्थस्तद्धर्मं स्वाध्याय । उत्त० ५९४ ।

**तित्थभेय**–तीर्थभेद तीर्थभेदक । प्रश्न० ४६ ।

**तित्थभेयए**–णाणाइमग्गविराहणाहत्थति भणियं होइ । आव० ६६२ ।

**तित्था**–तीर्थानि चक्रवर्तिन. समुद्रसीतादिमहानद्यवतारलक्षणानि तन्नामक देवनिवासभूतानि । ठाणा० १२३ ।

**तिदंड**–त्रिदण्ड । भग० ११३ ।

**तिदंडी**–त्रिदण्डी सुवर्णपुरुषकारीपरिव्राजक । आव० ४५२ ।

**तिदिसं पगासगा**–त्रिदिश प्रकाशकानि । आचा० ४१० ।

**तिदिसिं**–त्रिदिशि तिसृषु दिक्षु । जीवा० २३६ ।

**तिदुला**–तोटिका–त्रीन्–प्रस्तावात् मनोवाक्कायान् दोलतीव स्वरूपचलनेन त्रिदुला । उत्त० १२१ ।

**तिनयं**–त्रिनत आदिमध्यावसानेषु नमनभावात् । जीवा० २५६ ।

**तिनिशलता**–सञ्ज्वलनमानभेद । दश० १०१ ।

**तिनिशवृक्षगुहा**– । व्य० द्वि० १८६ आ ।

**तिन्न**–तिस्रो वारा । ओघ० २१७ । स्तिमित आर्द्रतां गत । ज्ञाता० ११४ ।

**तिपट्ट**–एक सस्तारकपट्टक द्वितीय उत्तरपट्टक तृतीयश्चोलपट्टक । ओघ० १३२ ।

**तिपडोलतित्तिएणं**– । आचा० ४२३ ।

**तिपरियल्लं**–त्रि.परिवर्त्तं त्रय. परावर्तका. वेष्टनानि । ओघ० २१४ ।

**तिपासियं**–त्रिपाशितं त्रीणि वेष्टनानि दवरकेन दत्त्वा पाशित पाशबन्धेन । ओघ० २१४ ।

**तिपुड**–धान्यविशेष. । दश० चू० ६२ ।

**तिप्पंति**–प्रतिजागरति । ग० ।

**तिप्पइ**–लेपते क्षरति ददाति । पिण्ड० ६३ ।

**तिप्पइय**–त्रिपदिका । जीवा० २४७ ।

**तिप्पणया**–परिदेवनता । सूत्र० ३६८ । दश० चू० १५ ।

**तिप्पति**–तिप्यति सुखाच्च्यावयति । सूत्र० ३२५ ।

**तिप्पमाण**–भयात् प्रस्वेदलालादि क्षरन् । ज्ञाता० १५६ ।

**तिप्पयंतो**–निन्दयन् । सम० ५४ ।

**तिप्पावणया**–तेपनं 'तिपृष्टे पृक्षरणार्थौ' इति वचनात् शोकातिरेकादेवाश्रुलालादिक्षरणापणा । भग० १८४ ।

**तिभाग**–त्रिसंख्या भागास्त्रिभागा । ज० प्र० ६८ ।

**तिमासिआ**–द्वादशी तृतीयभिक्षुप्रतिमा । सम० २१ ।

**तिमिंगल**–तिमिङ्गल महामत्स्यतम. । प्रश्न० ७ ।

**तिमि**–तिमि महामत्स्य । प्रश्न० ७ ।

**तिमितिमिंगिला**–मत्स्यविशेष । प्रज्ञा० ४४ ।

**तिमिरं**–तिमिरसम्पाद्यो भ्रम । प्रज्ञा० ३५६ । पित्तदयविकारेण दव्वपरिवदियस्य सबलीकरण । नि० चू० प्र० ३०२ आ । वनस्पतिविशेष । भग० ८०२ । तिमिर निकाचित ज्ञानावरणीयम् । आव० ७८८ । पर्वगविशेष । प्रज्ञा० ३३ ।

**तिमिरविद्धंसे**–तिमिर अन्धकार विध्वंसयति अपनयति तिमिरविध्वस । उत्त० ३५१ ।

**तिमिश्रगुहा**–गुहाविशेष । नंदी० २२८ ।

**तिमिसंधयार**–तमिस्रान्धकार अत्यन्ततम । प्रश्न० ६० ।

**तिमिसगुह**–तमिश्रगुहा । आव० १८०, ६८७ ।

**तिमिसगुहा**–वैताढ्यनवकूटे सप्तम । ज० प्र० ३४१ ।

**तिमिसगुहाकूड**–तमिस्रगुहाधिपदेवस्य निवासभूत कूट तिमिस्रगुहाकूटम् । ज० प्र० ७७ ।

**तिमिसा**–तमिस्रा रजनी । प्रश्न० ६८ ।

तिमिस्स-तमिस्रगुहा । प्रश्न० १६ ।
तिमिस्सयावेएइ-शल्यायते । आव० ४२२ ।
तिमीतिमिंगिलामच्छो-मत्स्यविशेष । जीवा० ३६ ।
तिम्मणं-व्यञ्जनम् । ओघ० १३३ ।
तिम्मति- । ओघ० २१७ ।
तिम्मिअ-तीमित । आव० १३१ ।
तिय-त्रिपथयुक्त स्थान त्रिकम् । ज्ञाता० २८ । त्रिक रथ्यात्रयमीलनस्थानम् । प्रश्न० ५८ । त्रिक यत्र रथ्यात्रय मिलति तत् । जीवा० २५८ ।
तियचउक्क-त्रिकचतुष्कम् । आव० ६७५ ।
तियभंगो-त्रिकरूपो भङ्ग त्रिकभङ्ग भङ्गत्रयम् । भग० ८६ ।
तिरजली-तिरोहिताञ्जलि । व्य० द्वि० २३७ आ ।
तिरवडिय-त्रिखण्डिक स्तेन । दश० ५२ ।
तिरासिय-त्रैराशिक गोशालकमतानुसारी निह्नवविशेष । सूत्र० ४५ ।
तिरिअवेइया-तिर्यग्वेदिका यत्र सडासमध्ये हस्तौ नीत्वा प्रतिलिख्यते सा । ओघ० ११० ।
तिरिक्खजोणिया-तिर्यग्गतिप्रायतिर्यग्लोके योनयस्तत्र जाता तिर्यग्लोके योनय-उत्पत्तिस्थानानि ये ते तिर्यग्योनिजा तिर्यग्योनिका । जीवा० ३३ ।
तिरिघट्टना-तिर्यग्घट्टना-प्रत्युपेक्षणा कुर्वन् वस्त्रेण तिर्यक् कुड्यादि घट्टयति । ओघ० १०६ ।
तिरिच्छसपाइ-तिर्यक् सपततीति तिर्यक्सपात पतङ्गादि । दश० १६४ ।
तिरिच्छा-तिरश्चीना अननुकूला सदनुष्ठानप्रतिघातिका । सूत्र० ३१६ ।
तिरियक्टटु-तिर्यक्कृत्वा अपहृत्य, हस्तयित्वा वा । सूत्र० ६० ।
तिरियंकरेइ-तिर्यक्करोति । सूर्य० ४६ ।
तिरियभित्ति-तिर्यग्भित्ति चकटोर्ध्वपदादो सङ्कटामध्यतो विस्तीर्णा । आचा० ३०२ ।
तिरिय-नो प्रतिकूल नो अनुकूल वितिरिच्छ तिरिय । नि० चू० तृ० ६१ आ । तिर्यक् । सूर्य० ४५ । तिर्यक्भित्तिप्रदेशः । जीवा० २०६ । तिर्यक् दिग अनुदिशश्च । आचा० ६३ । तीरित तीर पार प्रापितम् । प्रश्न० ११३ ।
तिरियलोए-रुचकस्याधस्तान्नवयोजनशतानि रुचकस्योपरिष्टान्नवयोजनशतानि तिर्यग्लोक । प्रज्ञा० १४४ ।
तिरियलोयतट्ट-तट्ट-स्थाल तिर्यग्लोके तट्टमिव तिर्यग्लोकतट्ट तस्मिश्च स्वयम्भूरमणसमुद्रवेदिकापर्यन्ते अष्टादशयोजनशतबाहल्ये समस्ततिर्यग्लोके च । प्रज्ञा० ७६ ।
तिरियलोयपयर-रुचकसमाद्भूतलभागान्नवयोजनशतानि गत्वा यज्ज्योतिश्चक्रस्योपरितन तिर्यग्लोकसम्बन्धि एकप्रादेशिकमाकाशप्रतर तत् तिर्यग्लोकप्रतरम् । प्रज्ञा० १४४ ।
तिरियवाए-तिर्यगुद्गच्छन् यो वाति वात स तिर्यग्वात । प्रज्ञा० ३० । यस्तिर्यग्वाति वात स तिर्यग्वात । जीवा० २९ ।
तिरीडति-किरिट च मुकुट धारयन्ति ये ते । सम० १२८ ।
तिरीड-तिरीट मुकुटम् । प्रश्न० ७७ । तिरीट शिखरत्रयोपेतं मुकुटमेव । प्रश्न० ४८ । किरीटानि मुकुटानि शिखरत्रयोपेतानि । ज० प्र० २०५ ।
तिरीडपट्टए-वृक्षविशेषस्य वल्कमय वस्त्रम् । बृ० द्वि० २०१ अ ।
तिरीडपट्टे-वृक्षत्वङ्मयम् । ठाणा० ३३८ ।
तिरीडपट्टो- । नि० चू० प्र० १२१ आ ।
तिरीडो-वृक्षविशेष । बृ० द्वि० २०१ अ ।
तिरीलोपट्टो-तिरीडरुक्खस्स वागो तस्स ततू पट्टसरिसो सो तिरीलोपट्टो । नि० चू० प्र० २५४ आ ।
तिरो-तिरोहितम् । बृ० तृ० १२६ अ ।
तिरोभाव-प्रकाश प्रकटत्वम्, आविर्भाव । विशे० १०६२ ।
तिर्यक्-पार्श्वत । ओघ० १६८ ।
तिर्यक्शल्या- । नदी० १५५ ।
तिर्यगानुपूर्वी-द्वितीयानुपूर्वी नाम । प्रज्ञा० ४७३ ।
तिर्यग्गामिनी-नदीति तिर्यक् छिनत्ति सा । व्य० प्र० २५ आ ।
तिर्यग्मनुजान्-वातमात्रवासकान् तिरश्च मध्यदसकादीन् । ओघ० १६६ ।

**तिर्यग्वेदिका**–जानुनोः पार्श्वतो हस्तौ नीत्वा वेदिकायास्तृतीयः प्रकारः। ठाणा० ३६२।

**तिलंतिलं**–तिलशः। विपा० ४७।

**तिलंबणा**–त्रिलम्बनः त्रिकवलः कवलत्रयप्रमाणः। ओघ० ११०।

**तिल**–तिलाः धान्यविशेषः। दश० १९३। औषधिविशेषः। प्रज्ञा० ३३। तिल अष्टाशितौ महाग्रहे एकत्रिंशत्तमः। जं० प्र० ५३५। ठाणा० ७९। वनस्पतिविशेषः। भग० ८०२।

**तिलए**–तिलकः वृक्षविशेषः। प्रज्ञा० ३२। तिलकः सप्तदशतीर्थकरस्य चैत्यवृक्षनाम। सम० १५२। भविष्यत्कालिनः प्रथमवासुदेवस्य प्रतिशत्रुः। सम० १५४। तिलकः भित्यादिषु पुण्ड्रम्। सूर्य० २६४। प्रज्ञा० ९९। तिलकः। अनु० २१२।

**तिलओ**–तिलकः भित्यादिषु पुण्ड्रम्। जीवा० १७५, ३७९।

**तिलकटओ**–तैलकण्टकः कोकिलच्छदः। प्रज्ञा० ३६२।

**तिलक**–धान्यवान् श्रेष्ठी। सूत्र० १९४। आधायाः परावर्तितद्वारे श्रेष्ठी, वसन्तपुरे श्रेष्ठिविशेषः। पिण्ड० १००। वृक्षविशेषः। कमनीयकामिनीकमलदलदीर्घसरदिन्दुधवललोचनकटाक्षविक्षेपात् कुसुमाद्याविर्भावप्रसुरिन्द्रियज्ञानस्य व्यक्त लिङ्ग तरुः। विशे० ९९।

**तिलकीडय**–तिलकीटकः तिलकृमिः। आव० ६२४।

**तिलखखाणिया**–तिलखादिका। आव० ३९७।

**तिलग**–तिलकं वृक्षविशेषः। आव० ५१३। वनस्पतिविशेषः। भग० ८०३। नि० चू० तृ० ६१ अ। तिलकः विशेषको ललाटाभरणाम्। औप० ५५।

**तिलगचोद्दसं**–तिलकं ललाटाभरण रत्नमयं चतुर्दश यत्र तत्तिलकचतुर्दशम्। जं० प्र० २१७।

**तिलगचोद्दसगं**–तिलकचतुर्दशक अलङ्कारविशेषः। आव० ६५। तिलकचतुर्दशकं आभरणविशेषः। आव० ९८।

**तिलगरयण**–तिलकरत्नं पुण्ड्रविशेषाः। जीवा० २०५। भित्यादिषु पुण्ड्रविशेषाः। जं० प्र० ५४। पुण्ड्रविशेषाः। जं० प्र० ४९।

**तिलगवणे**–तिलकवनम्। भग० ३६।

**तिलत्थंबओ**–तिलस्तम्बः। आव० २१२।

**तिलपप्पडओ**–जो आगमेहि तिलेहि कीरइ। दश० चू० ८६ आ।

**तिलपप्पडग**–तिलपर्पटः पिष्टतिलमयः। दश० १८५।

**तिलपर्पटिका**–शष्कुलिः। दश० १७६।

**तिलपिट्ठ**–तिलपिष्टः। तिललोट्टः। दश० १८५।

**तिलपीलगचक्क**–तिला कीडगा वा घुट्टेज्जा। नि० चू० द्वि० ६१ आ।

**तिलपुप्फवण्णे**–अष्टाशितौ महाग्रहे द्वात्रिंशत्तमः। जं० प्र० ५३५। ठाणा० ७९।

*तिलमक्खियं–तैलम्रक्षितम्। ओघ० १४०।*

**तिलय**–तिलकं एकोरुकद्वीपे वृक्षविशेषः। जीवा० १४५। तिलको विशेषको भूषकत्वात्। भग० ५४१। तिलकाः भित्यादिषु पुण्ड्राणि। सम० १३९। तिलकः वृक्षविशेषः। जीवा० २२९।

**तिलयवणं**–तिलकवनम्। आव० १८६।

**तिललोम**–तिलखलः। व्य० द्वि० ४०५ अ।

**तिलसंगुलिया**–तिलफलिका। भग० ६६४।

**तिलसक्कुलिया**–तिलशष्कुलिका तिलप्रधाना पिष्टमयपोलिका। आचा० ५८।

**तिलसिंगा**–तिलफलिका उत्कटिकाभेदे तिलः। प्रज्ञा० २६६।

**तिलसेंगलिया**–तिलशिम्बा। आव० २१२।

**तिलहारगकपट्टगो**–तिलहारकशिशुः। आव० ७८६।

**तिलुक्क**–त्रैलोक्यं भवनपतिव्यन्तरनरविद्याधरवैमानिकादिसमुदायलक्षणः। अनु० ३७।

**तिलोदक**–तत्प्रक्षालनजलम्। ठाणा०। १४७।

**तिलोदगं**–तिलोदक तिलैः केनचित्प्रकारेण प्रासुकीकृतमुदकम्। आचा० ३४६।

**तिल्लपूयं**–तैलप्रधानं पूपम्। आचा० ३५२।

**तिवई**–त्रिपदी।। आव० १६८। त्रिपदी[1] भूमौ पदत्रयः न्यासः पदत्रयस्योत्क्षमनं वा। जं० प्र० २६५। त्रयाणां पदाना समाहारस्त्रिपदी–मल्लस्येव रङ्गभूमौ पदत्रयविन्यासविशेषः। अन्त० १६।

**तिवई**–त्रिपदी मल्लस्येव रङ्गभूम्यां गतिविशेषः। ज्ञाता०

२३२।

**तिवग्गो**-त्रिवर्ग त्रैलोक्य धर्मार्थकामा वा । आव० ४२३ । वत्थव्वगसजूया सजेतोओ आगतुगसजता य-तिवग्गा । नि० चू० द्वि० १५५ आ ।

**तिवति**-त्रयाणा पदाना समाहारस्त्रिपदी-मल्लस्येव रङ्ग-भूमौ पदत्रयविन्यासविशेषस्ताम् । अन्त० १६ ।

**तिवलिय**-त्रिवलिका । भग० १६७ ।

**तिवायणं**-त्रिपातन-त्रीणि कायवाङ्मनांसि यद्वा त्रीणि देहायुरिन्द्रियलक्षणानि पातन चातिपातो-विनाश त्रयाणां कायवाङ्मनसा पातन-विनशन त्रयाणा देहायुरिन्द्रियरू-पाणा पातन वा विनाशनम् । पिण्ड० ३७ ।

**तिवायणा**-त्रयाणा मनोवाक्कायाना त्रिभ्यो वा देहायुष्के-न्द्रियलक्षणेभ्य प्राणेभ्य पातना-जीवस्य भ्रंसना त्रिपा-तना अतिशयवती यातना प्राणेभ्यो जीवस्य वेति, प्राणव धस्य दशम पर्याय । प्रश्न० ५ ।

**तिविट्ठ**-त्रिपृष्ठ सिंहमारक । व्य० द्वि० १६६ आ । त्रिपृष्ठ श्रेयासजिनकालभावि प्रथमवासुदेव । सम० ८८ । त्रिपृष्ठ जनपदोपद्रवकारी विषमगिरिगुहावासी महाक्सरीमारक । प्रश्न० ७५ ।

**तिविट्ठू**-भविष्यकालमावी नवमो वासुदेव । सम०१५४। त्रिपृष्ठ प्रथमवासुदेव । आव० १५९ ।

**तिव्व**-तीव्र ङ्गिति शरीरव्यापिका । भग० २३१ । तीव्रो विशुद्धो । विशे० ३०६ । तीव्र दुःसह । आचा० १५० । बृहद्द्वारोपेतम् । आचा० ३३३ । तीव्र विशुद्ध । आव० २८ । तीव्र तिक्त निम्बादिद्रव्य तदिव तीव्र । भग० ४८४ ।

**तिव्वदेसिय**-तीव्र बृहद्द्वारोपेत देशिक बृहत्क्षेत्रव्यापि तीव्र च तद्देशिक तीव्रदेशिकम्, तीव्रदेशिका महतिदेशे-ऽन्धकारोपेता । आचा० ३३३ ।

**तिव्वपरिणामा**-तीव्रपरिणामा प्रबलाविर्भूतस्वरूपा । आचा० १५० ।

**तिव्वलज्ज**-तीव्रलज्ज उत्कृष्टसयम । दश० ११० ।

**तिव्ववेर**-तीव्रवैर अनुबद्धविरोध । ज्ञाता० ८१ ।

**तिव्वा**-तीव्रा रोद्रा । आव० १६१ । तीव्रा । जीवा० १८७ । तीव्रा-तीव्रानुभागबन्धजनिता । प्रश्न० १६ ।

**तिव्वाभिलासे**-तीव्राभिलाष अध्यवसायित्वम् । आव० ८२५ ।

**तिव्विट्ठं**-अप्पफल । दश० चू० ८३ आ ।

**तिष्यगुप्तः**-आत्मप्रवादपूर्वाधीयानक । विशे० ९४६ ।

**तिष्यगुप्तं**-अन्त्यावयववादीनिह्नुव । विशे० ९५० ।

**तिसंधि**-त्रिसन्धि आदिमध्यावसानेषु सन्धिभावात् । जीवा० २५६ ।

**तिसंधिय**-त्रिसन्धित त्रिषु स्थानकेषु कृतसन्धिक नैकाङ्गि-कमित्यर्थ । भग० १६४ ।

**तिसल्लुण**- । नि० चू० द्वि० १६६ अ ।

**तिसरय**-त्रिसरिकम् । ज्ञाता० २२ ।

**तिसला**-चतुर्विंशतितमतीर्थंकरस्य माता । सम० १५१ । त्रिदेहदिन्ना पियकारिणी महावीरस्वामिन माता । आचा० ४२२ । त्रिशला सिद्धार्थक्षत्रियपत्नी । आचा० ४२१ । आव० १७६ । त्रिशला वर्द्धमानमाता । आव० १६० । त्रिशला महावीरजननी । भग० २६८ ।

**तिसाइओ**-तृषित । आव० ४२६ ।

**तिसाकालो**-गिम्हो । नि० चू० द्वि० ७५ आ ।

**तिसामासो**-ज्येष्ठ आषाढो वा । बृ० द्वि० २४३ आ ।

**तिसालयं**-त्रिशालक । जीवा० २६९ ।

**तिसिरा**-त्रिशालकम् मत्स्यबन्धविशेष । विपा० ८१ ।

**तिसूल**-त्रिशूल प्रसिद्ध शस्त्रविशेष । आव० ६५१ ।

**तिसोवाण**-त्रयाणा सोपानानां समाहार त्रिसोपानम् । ज० प्र० ४२ ।

**तिसोवाणपडिरूवग**-त्रिसोपानप्रतिरूपक त्रिसोपान च तत् प्रतिरूपक-प्रतिविशिष्टरूप यस्य तत् च । जीवा० १९८ । त्रिसोपानप्रतिरूपक प्रतिविशिष्टरूपक त्रिसोपा-नम् । जीवा० २८९ ।

**तिसोवाणपडिरूवग**-एकद्वार प्रति निर्गमप्रवेशार्थं त्रिदि-गभिमुखास्तिस्र सोपानपङ्क्तय । ठाणा० २३२ ।

**तिहि**-तिथि -रिक्तार्केन्दुदग्धादिदुष्टतिथिभ्यो भिन्ना तिथि । ज० प्र० २७३ ।

**तिहिपव्वणी**-तिथिपर्व । आव० ४२२ ।

**तिही**-तिथि मदनत्रयोदश्यादि । प्रश्न० १५५ । मदन-त्रयोदश्यादितिथिषु । भग० ४७३ । ज्ञाता० ८१ ।

मदनत्रयोदशीप्रभृतिः । ज्ञाता० ९६ ।
तीतं–अतीतम् । भग० ६६ ।
तीतद्धा–अनादावतीतः कालः । भग० ४७ ।
तीताए–अतीता । ठाणा० ७६ ।
तीमनं–शाकः । पिण्ड० १३५ ।
तीयं–त्रैतं त्रिकम् । सूत्र० ६७ ।
तीरं–तीरावर्तितजलापूरितं स्थानम् । जीवा० १६७ । तटम् । जीवा० १२३ ।
तीरइ–शक्यते । आव० ३२४ ।
तीरइत्ता–तीरयित्वा पारं नीत्वा । उत्त० ५७२ । तीरयित्वा अध्ययनादिना परिसमाप्य । उत्त० ५७२ ।
तीरट्ठी–संसारतीरभूतो मोक्षस्तदर्थी तीरार्थी । सूत्र० २६८। तीरं पारं भवार्णवस्यार्थं यत इत्येव शीलस्तीरार्थी तीरस्थायी वा तीरस्थितिः । ठाणा० १८१ ।
तीरा– । ठाणा० ४७७ ।
तीरावेति–तीरयति समर्थं करोति । व्य० प्र० १४७ अ ।
तीरित्तं– । आव० ३२२ ।
तीरियं–पूर्णेऽपि कलावधौ किञ्चित्कालावस्थानेन तीरितं । आव० ८५१ ।
तीरियकज्ज–तिरितकार्यः समाप्तकार्यः । व्य० प्र० १४५ अ ।
तीरिया–तीरं पारं नीता । ठाणा० ३८८ ।
तीरेइ–तीरयति पूर्णेऽपि तदवधौ स्तोककालावस्थानात् । भग० १२४ । पूर्णेऽपि काले स्तोककालमवस्थानात् । ज्ञाता० ७३ । पूर्णेऽपि कालावधावनुबन्धात्यागात् । उपा० १५ ।
तीयं–घृतम् । भग० ६ ।
तीसइ–त्रिंशत् । आव० ६३४ ।
तीसए–तिष्यकः शक्रसामानिकविकुर्वणाविवरणे अनागारः तिष्यकाभिधानोऽनगारः । भग० १५८ ।
तीसगुत्त–तिष्यगुप्तः जीवप्रदेशिका सम्बन्धी निह्नवः । ठाणा० ४१० । तिष्यगुप्तः श्रीमहावीरशासने चतुर्थो निह्नवः । उत्त० १५३ । तिष्यगुप्तः वस्वाचार्यशिष्यः । उत्त० १५८ । तिष्यगुप्तः यस्माज्जीवप्रदेशा उत्पन्नाः स आचार्यविशेषः । आव० ३११ । तिष्यगुप्तः चतुर्दशपूर्वविद्वसुनामाचार्यशिष्यः । आव० ३१४ । तिष्यगुप्तः वसुनामाचार्यशिष्यः । आव० ३१५ ।
तुंगारो–तुङ्गारः दक्षिणपूर्वो वातविशेषः । आव० ३८६ ।
तुंगिउद्देसए– । भग० ५५० ।
तुंगिक–तुङ्गिकवणो व्याघ्रापत्यगोत्रम् । नंदी० ४९ ।
तुंगीय–तुङ्गिकः सन्निवेशविशेषः । आव० २५५ ।
तुंगीया–नगरीविशेषः । भग० १३४, १३६ ।
तुंगीसिहरं–तुङ्गिशिखरम् । उत्त० ११७ ।
तुंडं–मुखम् । आव० ९३ ।
तुंडिय–तुण्डिकः यात्रासिद्धो वणिग्विशेषः । आव० ४१४ ।
तुंदिलः–जातबृहज्जठरः । उत्त० २७५ ।
तुंब–ज्ञाताया षष्ठाध्ययनम् । आव० ६५३ । तुम्ब अरकनिवेशस्थानम् । जं० प्र० २०४ । तुम्बं–षष्ठाङ्गे षष्ठं ज्ञातम् । सम० ३६ । उत्त० ६१४ । तुम्बं–अलाबुः । ज्ञाता० १० । तुम्बं फलविशेषः । प्रज्ञा० ३७ ।
तुंबक–तुम्बकः–अलाबुतुम्बयोर्लम्बत्ववृत्तत्वकृतभेदः । जं० प्र० २४४ ।
तुंबभूओ–तुम्बभूतः । आव० २६३ ।
तुंबभूयं–तुम्बभूतं आधारसामर्थ्यान्नाभिकल्पम् । प्रश्न० १३४ ।
तुंबरवः–गन्धर्वभेदविशेषः । प्रज्ञा० ७० ।
तुंबवण–तुम्बवनं । उत्त० ३२१ । तुम्बवन सन्निवेशविशेषः । आव० २८६ ।
तुंबवीणा–तुम्बा युक्ता वीणा येषां ते तुम्बवीणः तुम्बवीणावादकः । जीवा० २८१ ।
तुंबवीणिय–तुम्बवीणिकः । औप० ३ । प्रश्न० १४१ । अनु० ४६ ।
तुंबा–तुम्बा ज्योतिष्केन्द्रसूर्यस्याभ्यन्तरिका पर्षद् । जीवा० १७६ ।
तुंबाग–तुम्बाक त्वगिमज्जान्तर्वर्ति आर्द्रा वा तुलसीवेत्यन्ये । दश० १७६ ।
तुंबी–वल्लीविशेषः । प्रज्ञा० ३२ । वनस्पतिविशेषः । भग० ८०३ ।
तुंबुरु– । ठाणा० ४०६ ।
तुंबेणउरेपडिअं–तुम्बेनोरसि पतितम् । आव० १७६ ।

तुंबेति-मच्छियजालसम्मि जाणं काऊण अलाबुगाण भरिज्जति । नि० चू० प्र० ४५ अ ।

तु-प्रकर्षमंविशेषणार्थं । आव० ४३८ । पुन । आव० २८५ । पुन । आचा० २२१ । तु शब्दो भाषामात्रार्थ । सम० १२७ । हेतौ । व्य० प्र० ४७ आ । तु भाषामात्र । प्रश्न० १५६ । अधिकारार्थसमुच्चनार्थे । प्रज्ञा० ५५४ ।

तुअट्टति-स्वग्दर्शन कुर्वन्ति वामपार्श्वत परावृत्य दक्षिण पार्श्वेनावतिष्ठन्ते दक्षिणपार्श्वतो वा परावृत्य वामपार्श्वेनावतिष्ठन्ते इति । ज० प्र० ४६ ।

*तुअट्टण-त्वग्वर्तन निमज्जनम् । ओघ० ५८ ।*

तुच्छ-अल्पम् । प्रश्न० ६३, १०६ । ज्ञाता० ११३ । अल्प रिक्तम् । आव० ६४३ । द्रमकस्य काष्ठहारकादे कथ्यते, अथवा पूर्णो जातिकुलरूपाद्युपेतस्तद्विपरितस्तुच्छो, विज्ञानवान् वा पूर्णस्ततो अन्यस्तुच्छ । आचा० १४५ । तुच्छ उन्माद । सूत्र० २५० । तुच्छ यदृच्छाभिधायिनया नि सार । उत्त० २२७ ।

तुच्छकुलं-असारकुलम् । आव० १७८ ।

तुच्छकुलानि-अल्पमानुषाणि अगम्भीराशयानि वा । ठाणा० ४२० ।

तुच्छत्तं-तुच्छत्व नि सारता । प्रज्ञा० ३०३ ।

तुच्छत्ता-निस्सारता । भग० ७४२ ।

तुच्छोसहिभक्खणया-तुच्छौषधिभक्षणता असारौषधिभक्षणता । आव० ८२८ ।

तुज्झंतो-स्वदीय । आव० ७०८ ।

तुज्झ-भवन्त । ओघ० ८० ।

तुज्झच्चयं-तावकीनम् । आव० ६६ ।

तुट्ठ-तुष्ट आन्तरप्रीतिभाज । उत्त० ४४१ । तुष्ट-तोष कृतवान् । जीवा० २४३ । तुष्ट हृष्ट सन्तोषवत् । भग० ११६ ।

तुट्ठा-तुष्टा हृष्टा । दश० २५० ।

तुट्ठि-तुष्टि इच्छानिवृत्ति । ज० प्र० १५१ । आचा० ४२४ ।

तुडिअंग-त्रुटिताङ्ग द्रुमगणविशेषः । ज प्र० १०२ । चतुरशीत्या लक्षै पूर्वे गुणितं । त्रुटिताङ्गम् अनु० १०० ।

तुडिए-चतुरशीत्या गुणितं लक्षैस्त्रुटिताङ्गं त्रुटितम् । अनु० १०० । सूर्य० ६१ । भग० २१०, २७५ ८८८ । तुटिकम् अन्त पुरम् । सूर्य० २६७ । जीवा० ३८४ । तुडिक नाम वर्ग । भग० ५०५ ।

तुडिओ-तुटिक अभ्यन्तरपर्षत्सहचरस्त्रीजन । ज० प्र० ५५२ ।

तुडियंगा-त्रुटितानि तूर्याणि तत्कारणत्वात् त्रुटिताङ्गाः तूर्यदायिन । ठाणा० ५१७ ।

तुडियग-चतुरशीत्या लक्षं पूर्वे गुणित त्रुटिताङ्गम् । सूर्य० ६१ । भग० २१०, ८८८ । चतुरशीति पूर्ववर्षशतसहस्राणि एक त्रुटिताङ्गम् । जीवा० ३४५ ।

तुडियगा-तूर्याङ्गसम्पादका । सम० १८ ।

तुडियंगति-पूर्वाणि चतुरशीतिलक्षगुणितानि त्रुटिताङ्गानि । ठाणा० ८६ ।

तुडिय-त्रुटिक बाहुरक्षिक । भग० १३२, ४४७ त्रुटिका शेषतूर्यम् । सूर्य० २६७ । भग० १५४, ५०६ । वादित्रसमुदयो त्रुटि । नि० चू० द्वि० ७१ आ । सूर्यमणीमादय तुडिय । नि० चू० प्र० २५४ अ । विगल देसी भासाए सामयिगी वा एस पडिभासा । नि० चू० प्र० १२४ अ । तुटित बाहुरक्षिक । प्रज्ञा० ६१ । तुटित बाहुरक्ष । जीवा० १६२, १६४, २५३ । प्रज्ञा० ८८ । वादित्रम् । जीवा० । २१७ । आतोद्यम् । जीवा० २२७ । तुडितं भूषणविधिविशेष । जीवा० २६६ । चतुरशीतिस्त्रुटिताङ्गशतसहस्राणि एक त्रुटितम् । जीवा० ३४५ । त्रुटिताङ्ग । आव० ११० । तुटितानि बाहुरक्षका । उपा० २६ ।

तुडिया-असुरकुमारस्य लोकपालाना द्वितीयाऽग्रमहिषी, धरणस्य लोकपालानां द्वितीया अग्रमहिषी । ठाणा० १२७ । तुटिका बाहुरक्षिका । ओघ० ४६ । प्रश्न० ७१ । त्रुटिता-पिशाचकुमारेन्द्रस्य मध्यमिकापर्षत् । जीवा० १७१ । त्रुटिता-ज्योतिष्केन्द्रसूर्यस्य मध्यमिका पर्षत् । जीवा० १७६ ।

तुडियाणि-त्रुटितानि मृणालिका । आचा० ३६३ ।

तुडियाति- । ठाणा० ८६ ।

तुणगं-*वत्थच्छिद्दे पुणण्णकरण तुडिय । नि० चू० प्र०* १०४ आ ।

तुण्णए–तूणकः तान्त्रिकः तन्त्रीवादकः । अनु० १४१ ।
तुण्णाओ–तन्तुवायः । आव० ४२७ ।
तुण्णाग–सीवनकर्मकर्त्ता । नंदी० १६५ । तुन्नवायः । आव० १८७ ।
तुण्णागदारए–तूर्णकदारकः सूचिकः । अनु० १७६ ।
तुण्णागा–तुन्नाकाः सूच्याजीविनः । प्रज्ञा० ५६ ।
तुण्णिक्को–तूर्णीकः । आव० १८८, २६२ ।
तुत्त–तोत्रं प्राजनकः । उत्त० ५४८ ।
तुत्तगो–राहणगो । आव० ७६७ ।
तुत्ततो–भग्गो । नि० चू० प्र० ३५१ अ ।
तुन्दपरिमृजः–द्रमक । आचा० ३१४ ।
तुन्नणं–नोदणम् । आव० ६५१ ।
तुन्निए–कलाकौशलत–पूरितच्छिद्रम् । बृ० द्वि० ६२ अ ।
तुपट्टणं–संस्तारकेशयनम् । बृ० द्वि० २०७ आ ।
तुप्प–पुणमयकलेवरवसा । नि० चू० प्र० ४७ आ ।
तुप्पतरयं–स्निग्धतरम् । ओघ० १६६ ।
तुप्पियं–स्नेहितम् । विपा० ४७ ।
तुप्पोट्ठ–मृष्टः । ओघ० ५५ ।
तुप्पोट्ठा–मुखा म्रक्षिता मदनेन वा वेष्टिता. शीतरक्षादिनिमित्तमोष्ठा येषां ते तुप्पोष्ठा । अनु० २७ ।
तुबरं–कषायद्रव्यं आमलकादि । जं० प्र० ४११ ।
तुब्भच्चया–त्वदीया । आव० ६३२ ।
तुमंतुम–तुमन्तुमः हृदयस्थः कोपविशेष एव । भग० ६२४ । तिरस्कारप्रधानमेकवचनान्त बहुवचनोच्चारणयोग्ये । सूत्र० १८३ ।
तुयट्टंतं–स्वग्वर्तनं स्वपनम् । दश० १५५ ।
तुयट्टंति–निषण्णा शयने । भग० ६१८ ।
तुयट्टणं–त्वग्वर्तनम् । आव० ६५४ । निपन्नं क्रियते । ओघ० १३० । आव० ६५४ । शयनम् । ओघ० २१४ ।
तुयट्टंति–त्वग्वर्तनं करोति । जीवा० २०१ ।
तुयट्टियव्वं–त्वग्वर्तितव्य शयनीय, सामायिकाद्युच्चारणपूर्वक शरीरप्रमार्जनां विधाय संस्तारकोत्तरपट्टयोर्वामपार्श्वेन बाहूपधानेन शयनीयं इत्यादिना न्यायेनेत्यर्थः । ज्ञाता० ६१ ।
तुयट्टेज्ज–शयीत । भग० ६० ।
तुयर–कुसुमोदकादि । बृ० द्वि० २४६ आ ।
तुयावइत्त–तोदं कृत्वा तोदयित्वा व्यथामुत्पाद्य या प्रव्रज्या दीयते । ठाणा० २७६, १२६ ।
तुरंति–त्वरन्ते । विशे० ५३८ ।
तुरंतो–त्वरयन् । आव० ६१७ । त्वरितम् । नि० चू० प्र० ३१६ आ ।
तुरमाणभोज्जं–त्वराभोज्यम् । दश० ।
तुरमिणी–नगरीविशेषः । बृ० तृ० ११३ अ ।
तुरली–थालिया अथवा । नि० चू० प्र० ६० आ ।
तुरिओ–त्वरितः । ओघ० १५५ ।
तुरियं–त्वरित शीघ्रम् । आव० ६६ । त्वरितः शीघ्रम् । ज्ञाता० ३५ ।
तुरिमिणि–णगरीविसेसो । नि० चू० प्र० २५८ अ ।
तुरियं चवलं–त्वरितचपलं अतिवटुलतया । ज्ञाता० १६२ ।
तुरियं–त्वरिता–आकुला न स्वाभाविकया आन्तराकूततः । ज्ञाता० ३६ । त्वरितं–वचनचापल्यतः । प्रश्न० १२० । त्वरितत्वं मनस औत्सुक्यात् । ज्ञाता० ६६ । त्वरितत्वं मनसमुत्क्षेपे । प्रश्न० १२६ ।
तुरियकरणं–त्वरितकार्यं आतम् । ओघ० १७७ ।
तुरियगई–त्वरितगतिः मानसोत्सुक्यप्रवर्तित वेगवद्गतिः । भग० १७८ ।
तुरियगति– । ठाणा० १६८ ।
तुरियणिद्दा–त्वरितनिद्रा मरणनिद्रा । आव० ३४६ ।
तुरिया–त्वरिता–आकुला । भग० ५२७ । त्वरिता–आकुलता न स्वभावजेत्यर्थः । भग० १६७ । त्वरितः त्वरावान् । भग० १७८ ।
तुरी–वस्त्रवनोपकरणः । आचा० २२८ ।
तुरुक्कं–तुरुष्क सिल्हकम् । प्रश्न० ७३ । जीवा० १६०, २०६ । जं० प्र० ५१, १४४ । प्रज्ञा० ८७ । औप० ५ । ज्ञाता० ४० । सिल्हकाभिधान गन्धद्रव्यम् । सम० ६१ ।
तुरुक्कधूव–सेल्हकसत्को धूपः । उत्त० ५ ।
तुरुक्का–तुरुष्क सुगन्धिद्रव्यविशेषः । आव० १०१ ।
तुरुत्त–गन्धद्रव्यम् । नि० चू० प्र० २७६ आ ।
तुरुसुंयगा–त्रीन्द्रियजन्तुविशेषः । प्रज्ञा० ४२ ।
तुरुमिणिदत्त–दारुणमिथ्यात्वः । मरण० ।
तुरुमिणिणगरी–नगरीविशेष । नि० चू० प्र० २१८ ।

तुरविणी-तुरमिणी नगरी, यत्र जितशत्रुराजा । आव० ३९९।

तुलना-भावना । विशे० ११।

तुलयति-अभिभवति । प्रश्न० १७ । जयतीति । ठाणा० ४६६।

तुलसी-भूतानां चैत्यवृक्षः । ठाणा० ४४२ । भग० ८०२। गुच्छविशेषः । प्रज्ञा० ३२ । आचा० ५७।

तुलसे-हरितविशेषः । प्रज्ञा० ३३।

तुला-इयत्तापरिच्छेदहेतुः । उत्त० ६८७ । अनु० १५४।

तुलाकोटिकानि-नूपुराणि । औप० ५५।

तुलासंठिए-तुलासंस्थितः पुनर्वसुनक्षत्रसंस्थानम् । सूर्य० १३०।

तुलिया-तोलयित्वा गुणदोषवत्तया परिभाव्य । उत्त० २८९ । परीक्षात्मान धृतिदाढ्यादिगुणान्वितमिति । उत्त० २५३।

तुल्य-समचतुरस्रम् । जीवा० ४२।

तुल्लविसेसाहिय-परस्परापेक्षया तुल्यत्वेन विशेषण असङ्ख्येयभागादिनाऽधिक पूर्वकालबद्धकर्मविशेषाऽधिकतर तुल्यविशेषाधिकम् । भग० ९६१।

तुवर-सकषायम् । उत्त० ६५३।

तुवट्टण- । नि० चू० प्र० ६०।

तुवर-धान्यविशेषः । नि० चू० तृ० ५२ आ।

तुवरपत्ते-पलाशपत्रादीनि । बृ० द्वि० १०६ अ।

तुवरफल-हरीतक्यादय । नि० चू० प्र० ४७ आ।

तुवरफला-हरीतकीप्रभृतीनि । बृ० द्वि० १०६ अ।

तुवरिका-सौराष्ट्रिका । दश० १७०।

तुवरिमट्टिया-ते पुढविपरिणामा वणिया जेण सुवण्ण वणिज्जति, सोरट्टिया तुवरिमट्टिया भण्णति । नि० चू० प्र० २१८।

तुवरी-तुवरी-धान्यविशेषः । दश० १९३ । भग० ८०२।

तुषमुख-बीजसूक्ष्मम् । ठाणा० ४३०।

तुषराशि- । ओघ० ४१।

तुषाग्नि-तुषशरकोऽग्नि । जीवा० १२३।

तुट्ठ-महितः । आव० ७५९।

तुसण्णो- । नि० चू० प्र० २६० आ।

तुससाला-शाल्यादितुसट्टाण तुससाला । नि० चू० प्र० २६५ अ।

तुसा-कोद्रवादीनि । ठाणा० ४१९।

तुसार-तुषारं हिमम् । ज्ञाता० ६९ । जीवा० ११९।

तुसार-तुषारं हिमम् । आव० २०४।

तुसारपुंज-तुषारपुञ्जम् । जीवा० ११९।

तुसिओ-तुषितः । आव० १३५।

तुसिणिया-तूष्णीका मूका । दश० १०८।

तुसिणी-तूष्णी मूकता । आव० ५४८।

तुसिता-सुप्रतिष्ठाभविमानवासी षष्ठो लोकान्तिकदेवः । ठाणा० ४३२।

तुसिय-तुष्टः सुप्रतिष्ठाभविमानवासी षष्ठो लोकान्तिक देवः । भग० २७१ । ज्ञाता० १५३।

तुसोदए-तुषोदकं व्रीह्युदकम् । ठाणा० १४७।

तुसोदग-तुषोदकं पानकभेदः । आचा० ३४६।

तुहणा-कन्दविशेषः । उत्त० ६९१।

तुहं-तावकीनम् । आव० ५६५।

तुहिनं-हिमम् । ठाणा० २८७।

तूडिअ-त्रुटिकं बाह्वाभरणम् । जं० प्र० १०६।

तूणइल्ल-तूणाभिधानवाद्यविशेषवान् । औप० ३,४ । प्रश्न० १४१ । अनु० ४६ । जीवा० २८१।

तूणइल्ला-तूणाभिधानवाद्यविशेषवन्तः । राज० २ । ज्ञाता० ४०।

तूणक-वाद्यविशेषः । प्रश्न० १५९।

तूणीरा-तूणा । जं० प्र० २०६।

तूमणया-देशी० स्थगनम् । व्य० प्र० १२१ आ।

तूयरी-तुवरी आढकी । पिण्ड० १६८।

तूरंतो-त्वरयन् म१० । त्वरमाणः । ओघ० ६५।

तूर-वाद्यं । आव० १४५।

तूरपत्ति- । नि० चू० द्वि० १६७ आ।

तूरवइ-तूर्यपतिः नटमहत्तरः । बृ० प्र० १०३ आ।

तूणन- । ओघ० १९९।

तूल-तूलं अर्कतूलं । सूर्य० २९३ । अर्कतूलम् । ज्ञाता० ६ । अर्कतूलम् । जं० प्र० ५५ । जीवा० २१०।

तूलक-तूलम् । उत्त० ६५३।

तूलकड-अर्कादितूलनिष्पन्नम् । आचा० ३६३ ।
तूलि-तूलिका । ठाणा० २३४ ।
तूलिअ-तूलिका । भ० ।
तूलिया-तूली संस्कृतरुतादिभृताऽर्कतूलादिभृता वा । बृ० द्वि० २२० आ ।
तूलियाओ-तूलिका बालमध्यच्छिन्नलेखनकूर्चिका । ज्ञाता० १४४ ।
तूली-तूली अप्रतिलेखितदूष्यपञ्चके प्रथम । आव० ६५२ । एगबहुत्वमेरगा तूली अक्कडोडुगाइतूलभरिया वा तूली । नि० चू० द्वि० ६१ अ ।
तूवरो-तुवर कषाय । जीवा० २४४ ।
तूणीका -विशाचभेदविशेष । प्रज्ञा० ७० ।
तूसीणिए-तूष्णीको वचनरहित । ज्ञाता० ८५ ।
तूह-तीर्थम् । बृ० द्वि० ३० आ । तीर्थं मवा जलपान स्थान निपानमित्यथ । बृ० तृ० ६२ आ ।
तृणशूक- । व्य० प्र० ११६ अ ।
तृणकचवरः- । जीवा० २८२ ।
तेंदु-तिन्दुक बहुबीजकवृक्षविशेष । प्रज्ञा० ३२ ।
तेंदुओ-गन्धर्वाणां चैत्यवृक्षनाम । ठाणा० ४४२ ।
तेंदुग-तिन्दुक वाणारस्या तिन्दुकवनोद्याने यक्षायतननाम । उत्त० ३५६ । तिन्दुक आवस्त्यामुद्यान । आव० ३१२ ।
तेंदुय-टेम्बरूयम् । आचा० ३४६ ।
तेंदुयवण-तिन्दुकवन वाणारस्यामुद्यानविशेष । उत्त० ३५६ ।
तेंदूस-तिन्दुस-फलविशेष । प्रज्ञा० ३७ । तेंदूसए-कन्दुक । ज्ञाता० १५८ ।
तेंबुरुमिजिया-त्रीन्द्रियजन्तुविशेष । जीवा० ३२ ।
तेअ-तेज -परासहनीय पुण्य, प्रताप । ज० प्र० १८२ । तेजस -शरीरम् । ज० प्र० २१६ ।
तेअतसो-तेजस्तलीन जातिवाचकः शब्द । ज० प्र० १२८ ।
तेआ-तेजा त्रयोदशीरात्रिनाम । ज० प्र० ४९१ ।
तेउ-तेज उष्ण । आचा० २४५ । बृ० प्र० ३०६ आ ।
तेउक्ते- । ठाणा० १९७ ।
तेउप्पभे- । ठाणा० १९७ ।
तेउफासे-तेज स्पर्श -उष्णस्पर्श । आचा० ३१० ।
तेउलेसा-तेजोरूपालेश्या येषा ते तेजोलेश्या । ठाणा० १०० ।
तेउलेसे-तेजोलेश्या-विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स । सूर्य० ५ । तेजोलेश्या विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला । ज० प्र० १६ ।
तेउलेस्से-तेजोलेश्या तपोविभूतिज तेजस्वित्व तैजसशरीरपरिणतिरूप महाज्वालाकल्पम् । ठाणा० १४९ ।
तेउसिहे-अग्निशिखस्य द्वितीयो लोकपाल । ठाणा० १९७ ।
तेऊ-अग्निशिखस्य प्रथमो लोकपाल । ठाणा० १९७ । तेजायोगात्तेजासि-अग्न्यस्तद्वर्तिनो जीवा अपि । उत्त० ६९३ ।
तेऊलेसा-तेजो-वह्निस्तद्वर्णालेश्या लोहितवर्णेत्यर्थं तेजोलेश्या । ठाणा० १७५ ।
तेए-तेज तेजोलेश्या । भग० ६७३ । तेज -शरीरस्य कान्ति । ठाणा० ४२१ । तेज तपोमाहात्म्यम् । उत्त० ३६५ । तेज शरीरार्चि । भग० १३२ । तेज -शरीरप्रभवम् । प्रज्ञा० ८८ । तेज -तैजस-उष्मलिङ्ग भक्ताद्याहारपरिणमनकारणम् । प्रज्ञा० ४०६ । तेज -ज्ञान, भावतमा विनाशकत्वात् । प्रश्न० १५८ । तेज शरीरसम्बन्धिरोचि प्रभावो वा । ओप० ५० ।
तेएण-तेजसा कान्त्या । उत्त० २६ ।
तेओगकडजुम्मे-त्र्योज कृतयुग्म द्वादशादय । भग० ९६४ ।
तेओगकलिओए-त्र्योजकल्योजे त्रयोदशादय । भग० ९६४ ।
तेओगतेओगे-त्र्योजत्र्योजराशो तु पञ्चदशादय । भग० ९६४ ।
तेओगदावरजुम्मे-त्र्योजद्वापरे तु चतुर्दशादय । भग० ९६४ ।
तेओय-त्र्योज । सूर्य० १९७ ।
तेगिच्छि-चिकित्सक वैद्य । ओप० २१ ।

तेगिच्छिपुत्तो-चिकित्सकपुत्र चिकित्सामात्रकुशलस्य पुत्र । विपा० ४० ।

तेगिच्छियसाला-चिकित्साशाल आरोग्यशाला । ज्ञाता० १८० ।

तेगिच्छी-चिकित्सक चिकित्सामात्रकुशल । विपा० ४० ।

तेज -विशिष्टसंवेदनप्रभवा धर्म्मदेशना । न० अनु० वा ।

तेजचन्द्रबुध - । जं० प्र० ५४५ ।

तेजित-उपचितम् । प्रज्ञा० ६१ ।

तेओनिसर्जनं- । ठाणा० ३३२ ।

तेण-स्तेना उपकरणापहारिण । व्य० द्वि० १४ अ । य । ठाणा० ७ । स्तेन -चौर । ओघ० २३ । स्तेना चौरा । जं० प्र० ६६ । स्तेन -भगवद्वचनग्रहणात् अन्यापदेशयावनाद्वा न मा कश्चिज्जानातीति भावयन् चौरोऽनी । दश० १८८ ।

तेणतेणो-प्रचुर पन्नगाल हरतो तेणो स तेणो स सेह वाहिं गामादियाण ठवेत्ता अप्पणा भिक्खस्स पविट्ठो एत्थंतरे जो त सेह अण्णो सप्पोभेत्ता हरति सो तेणतेणो । नि० चू० द्वि० ४५ अ ।

तेणयवधो-यत्रमध्येनैव पात्रककाष्ठस्य दवरके याति तावद् यावत्सा राजि सीविता भवति स स्तेनकबन्ध । ओघ० १४६ ।

तेणाहडे-स्तेनाहृत चौरानीतम् । उपा० ७ ।

तेणिक्का-स्तैनिक्य स्तैय, तृतीयाधर्मद्वारस्य त्रयोदश नाम । प्रश्न० ४३ ।

तेणिय-स्तैन्य यत्परैभ्य सत्वात्मन गूहयन् स्तैनक इव वन्दते कृतिकर्मणि षोडशो दोष । आव० ५४४ ।

तेणेय-तन तस्मिन् । सूय० ६ ।

तेतलि-वनस्पतिविशेष । भग० ८०३ ।

तेतलिपुरं-यत्र कनकरथो राजा । आव० ३७३ ।

तेतलिसुओ-तेतलिसुत कनकरथराज्ञोऽमात्य । आव० ३७३ ।

तेतलिसुत -अमात्यविशेष । विपा० ८८ ।

तेतली- । जं० प्र० ३१३ । ठाणा० ४०६ ।

तेतसीतिय-तेनलिसुत । ठाणा० ५१० ।

तेत्तली-षष्ठाङ्गे चतुर्दश ज्ञातम् । सम० ३६ ।

तेनाहडे-स्तेनाहृत-चौरानीतम् । आव० ८२२ ।

तेनिस-तैनिश-तिनिशाभिधानवृक्षसम्बन्धि । भग० ३२२ ।

तेपते-क्षरति सञ्चलति मर्यादातो भ्रश्यति निर्मर्यादो भवतीति यावत् । आचा० १३६ ।

तेपन्नता-तेपनता तिपे -क्षरणार्थत्वादश्रुविमोचनम् । ठाणा० १८६ ।

तेप्पिऊण-कल्पयित्वा । ओघ० १२२ ।

तेपुरणमिजिया-त्रीन्द्रियजन्तुविशेष । प्रज्ञा० ४२ ।

तेमासिए-त्रैमासिक । आचा० ३२७ ।

तेयसी-दीप्तशरीरत्वात् । सम० १५६ । तेजस्वी-तेज शरीरप्रभा तद्वास्तेजस्वी । ज्ञाता० ६ । तेजस्विन शरीरप्रभायुक्ता । भग०१३६ ।

तेय-तेज शरीरप्रभवम् । जीवा० १६२ । माहात्म्यम् । बृ० द्वि० २१२ आ ।

तेयए-तेजसोविकार तैजसम् । प्रज्ञा० २६८ । तैजस-तेज पुद्गलाना विकार । जीवा० १४ । तेजसोभाव-स्तैजस उष्मादिलिङ्गमिदम् । ठाणा० २६५ । रसाद्याहारपाकजनन तेजोनिसर्गलब्धिनिबन्धन च तैजसो विकारस्तैजसम् । अनु० १६६ ।

तेयतली-तेजश्च तल च रूप येषा ते तेजस्तलिनः, भारनवर्षे मनुष्यभेद । भग० २७६ ।

तेयते-तेजते-दीप्यते । उत्त० १८६ ।

तेयनिसग्ग-तेजोनिसर्ग । आव० २१४ । भगवत्यां पञ्चदशशते प्रकरणम् । भग० ६६५ ।

तेयफास-तेज स्पर्श -उष्णरूपतापरिणतनरककुड्यादिस्पर्श । जीवा० १२८ ।

तेयलिणाए- । ज्ञाता० २०४ ।

तेयलिपुत्त-कनकरथभूपस्यामात्य । ज्ञाता० १८४ ।

तेयलिपुर-कनकरथनृपस्य नगरी । ज्ञाता० १८४ ।

तेयली-तेतलिसुताभिधानोऽमात्य । ज्ञाता० १० । ज्ञातायां चतुर्दशाध्ययनम् । आव० ६५३ । तेतलि -षष्ठाङ्गे चतुर्दश ज्ञातम् । उत्त० ६१४ ।

तेयलेसे-तेजोलेश्या विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजो-

ज्वाला । भग० १२ ।

**तेयलेस्स**–तेजोलेश्या सुखासिका । भग० ६५७ । शरीर-दीप्ति सुखासिका वा । ठाणा० १४५ ।

**तेयलेस्सा**–तेजोलेश्या विशिष्टतपोजन्यलब्धिविशेषप्रभावा तेजोज्वाला । औप० ८४ ।

**तेयल्लेसे**–विशिष्टतपोजन्यलब्धिविषयप्रभवा तेजोज्वाला । ज्ञाता० ७ ।

**तेयस**–तैजस यदुदयात्तैजसशरीरप्रायोग्यान् पुद्गलानादाय तैजसशरीररूपतया परिणमयति परिणम्य च जीवप्रदेशैः सह परस्परानुगमरूपतया सम्बन्धयति तत् । प्रज्ञा० ४६६ । तेजस–तेज पुद्गलानां विकार तैजसम् । प्रज्ञा० ४०६ ।

**तेयस्सि**–तेजस्वी दीप्तिमान् । आचा० १६४ ।

**तेया**–तेजोमय तेजसम् । आव० ३६ । तेजा त्रयोदशीरात्रि-नाम् । सूर्य० १४७ ।

**तेयालगपट्टण**–पट्टणविसेसो । नि० चू० प्र० ४४ आ ।

**तेयाहिय**–ज्वरविशेष । भग० १९८ ।

**तेयोए**–यस्तु त्रिपर्यवसित स त्र्योज । ठाणा० २३७ ।

**तेयोगे**–त्रिभिरादित एव कृतयुग्मादीपरिवर्तिभिरोजो वि-षमराशि विशेषस्त्र्योज । भग० ७४४ ।

**तेरासि**–त्रैराशिक नपुंसक । पिण्ड० १५७ ।

**तेरासिओ**–त्रैराशिक नपुंसकम् । बृ० तृ० १५२ अ ।

**तेरासिय**–त्रीन् राशीन् विदधन्ति जिगीषन्तीति त्रैराशि-का । उत्त० १५३ ।

**तेरासिया**–त्रीन् राशीन् जीवाजीवनोजीवरूपान् वदन्ति ये ते त्रैराशिका । औप० १०६ ।

**तेलसमुग्गए**–तैलसमुद्गक सुगन्धितैलाधारविशेष । जीवा० २१४ ।

**तेला**– । ठाणा० ३६० ।

**तेल्ल**–तैलम् । आव० ८३१ ।

**तेल्लकुडो**–तैलकुट तैलकुम्भ । आव० ३१० ।

**तेल्लपेला**–तैलभृता तैलाधारो भाजनविशेष । भग० ६६४ । तैलभृता सौराष्ट्रप्रसिद्धो मृण्मयस्तैलस्य भाजनविशेष । निरय० ४, १४ । ज्ञाता० १४ ।

**तेल्लघम्म**–तैलाभ्यङ्गस्य यत्र स्थितस्य व्यापना क्रियते तत् तैलधर्म । औप० ६५ ।

**तेल्लदोणी**–तैलद्रोणी । आव० २२७ ।

**तेल्लमायण**–तैलभाजनम् । आव० ६४१ ।

**तेल्लसमुग्गया**–तैलसमुद्गको सुगन्धितैलाधारविशेषो । ज० प्र० ५६ ।

**तेल्लियं**–तैलिक तिलपीडनकर्म । आव० ८२९ ।

**तेल्लिया**–तैल्ल । नि० चू० प्र० २४४ अ ।

**तेलुक्क**–त्रयोलोकास्त्रिलोका भवनपतिव्यन्तरविद्याधरज्यो-तिष्कवैमानिका त्रिलोका एव त्रैलोक्यम् । नंदी० १६२ ।

**तेवच्छिवाडिया**–कृष्णलेश्याया वर्णदृष्टान्त । प्रज्ञा० ३६० ।

**तैजस**–तेज–स्वतस्य जीवानुग्रहप्रयोजनम् । तत्त्वा० २ ४६ ।

**तैजसबन्धन**–यदुदयात् तैजसपुद्गलानां गृहीतानां गृह्यमा-णानां च परस्परं कार्मणपुद्गलैः सह सम्बन्धस्तत्तैजसब-न्धननाम । प्रज्ञा० ४७० ।

**तैजससङ्घातनाम**–यदुदयवशात् तैजसशरीररचनाऽनुकारि-सङ्घातरूपा जायते तत्तैजससङ्घातनाम । प्रज्ञा० ४७० ।

**तैजससमुद्घात**–तैजसेन हेतुभूतेन समुद्घात तैजसशरीर-नामकर्माश्रय । जीवा० १७ ।

**तैतिल**–स्त्रीविलोचना परनाम, चतुर्थं करणम् । ज० प्र० ४६४ ।

**तैलाग्नि०**–तैलमध्योऽग्नि । जीवा० १२३ ।

**तोड**–तुण्ड मुखविभाग भल्लीरूप । ज० प्र० २०१ ।

**तो**–तथा । विशे० ७५५ ।

**तोए**–तोय सम्बन्धहेतु स्नेह । प्रश्न० १५७ ।

**तोट्टा**–चतुरिन्द्रियजन्तुविशेष । प्रज्ञा० ४२ ।

**तोटे**–पल्लवो । नि० चू० प्र० १७६ आ ।

**तोडुक्कप्पे**–यथाऽऽगमावधानतया निष्ठुर इति । ज० प्र० २२४ ।

**तोण**–इषुधि । निरय० १८ । इषुधि–भस्त्रकम् । औप० ७१ । बाणाश्रय । जीवा० १६३ । तोण–शरधि । भग० ३२२ । तूणा–तूणीरा । ज० प्र० २०६ । भस्त्र-का । ज० प्र० २१२ । तूण–शर–भस्त्रादि । ज्ञाता० २१६ । बाणाश्रया । ज० प्र० २७ । तोणा–शरधि । प्रश्न० ४८ । तोणीर–शरधि । प्रश्न० ४७ ।

**तोत्त–गुत्ते**–स्पष्टतोत्रेणापि तोत्र प्राजनको व्यथाजनका

वचन वा । उत्त० ६२ । जं० प्र० २२५ ।

**तोत्तए**–तोत्रकम् । दश० ८६ ।

**तोत्तगवेसए**–तोत्र प्राजनको व्यथोपजनकं वचनं वा गवेषयति–अन्वेषयतीति तोत्रगवेषक । उत्त० ६२ ।

**तोत्र**–निहन्यमानानामश्वानां शब्द । जं० प्र० २०६ ।

**तोमर**–तोमर–बाणविशेष । प्रश्न० २१ । तोमरम् । जीवा० ११७ । तोमर–गदाकारशस्त्रविशेष । आव० ६५१ । तोमर–आयुधविशेष । भग० १८२ । तामरा बाणविशेषा । जं० प्र० २१२ ।

**तोमरग्ग**–तोमराग्रम् । जीवा० १०६ ।

**तोय**–पूर्वाषाढा । जं० प्र० ४९९ । स्नेह० । औप० ३५, १६ । तोयमिव बन्धहेतुत्वात्तोयं स्नेह । ठाणा० ४५४ ।

**तोयधारा**–पञ्चमा दिक्कुमारी । जं० प्र० ३८३ । ऊर्ध्व लोकवास्तव्या दिक्कुमारी । आव० १२२ ।

**तोयपट्ठ**–तोयपृष्ठं जलोपरितनभाग । औप० ४६ । प्रश्न० ६१ ।

**तोयली**–वलयविशेष । प्रज्ञा० ३३ ।

**तोरण**– । प्रश्न० ८ । द्वारादिसम्बन्धि । जीवा० २५८ । तोरणानि प्रतोलीद्वारेषु । प्रज्ञा० ८६ । तोरणम् । अनु० १७ । तोरणं द्वारादिसम्बन्धि । प्रज्ञा० ७१ ।

**तोरणसंठिओ**–तोरणसंस्थित । जीवा० २७१ ।

**तोवुणति**– । नि० चू० प्र० १२१ आ ।

**तोसणमादिनइ**– । नि० चू० द्वि० ११ ।

**तोसलि**–आचार्यविशेष । आचा० २६२ । देशविशेष । नि० चू० तृ० २१ आ । बृ० द्वि० १७५ अ । नगरविशेष । बृ० द्वि० २६७ अ । तोसलिग्राम । आव० २१६ ।

**तोसलिओ**–तोसलिक मणिप्रतिमारक्षको राजा । व्य० द्वि० १५४ अ ।

**तोसलिपुत्तो**–तोसलिपुत्र आचार्य । आव० ३०१ ।

**तोसलिपुत्ता**–तोसलिपुत्रा आर्यरक्षितधर्माचार्या । आव० २९६ । आर्यरक्षितस्याचार्या । उत्त० ९६ ।

**तोसलिविषय**– । बृ० द्वि० १७३ आ ।

**तोसलिविषय**–देशविशेष । बृ० प्र० १७५ आ ।

**तोसलिविसए**–देशविशेष । नि० चू० प्र० ३१५ आ, २५४ आ ।

**तोसलिविसयं**–देशविषय । नि० चू० द्वि० १५२ अ ।

**तोसलीए**–नगरविशेष । नि० चू० तृ० १५ अ ।

**तोहाडिका**–खरमुही । आचा० ४१२ ।

**त्तिकट्टु**–इतिकृत्वा–इतिनिश्चयं विधाय सम्प्रलग्ना योद्धुमिति । ज्ञाता० २२१ । इतिकृत्वा–उच्चार्य । जं० प्र० १४३ ।

**त्थ**– आव० ५६१ । अनया । विशे० ४०२ । अत्र । विशे० ९३९ ।

**त्थियको**–विश्रान्त । आव० ४०८ ।

**त्थिग्गलय**–पडिया । नि० चू० प्र० १२५ आ ।

**त्थिमिए**–स्तिमित–निर्भयम् । विपा० ३९ ।

**त्थिमिय**–स्तिमित–स्थिरं स्वचक्रपरचक्रादिभयवर्जितत्वात् । भग० ७ । स्तिमिता भयवर्जितत्वेन स्थिरा । ज्ञाता० १ । स्तिमिता–स्वचक्रपरचक्रतस्करडमरादिसमुत्थभयकल्लोलमालाविवर्जिता । सूर्य० १ ।

**त्थोभ**–स्तोभक निपात । आव० ३७६ ।

**त्यक्तं**–उज्झितं छर्दितम् । पिण्ड० १६६ ।

**त्यक्तद्रव्यसम्यक्**–जड परित्यक्त मञ्जूषादिस्त्यक्तद्रव्यसम्यक् । आचा० १७९ ।

**त्यक्तारम्भा** – । आचा० २७१ ।

**त्याग**–तप । सम० १२१ ।

**त्रपुषफल**–खादिमे फलविशेष । आव० ८११ ।

**त्रपुषी**–वल्लीविशेष । प्रज्ञा० ३० । जीवा० २६, १३६ । उत्त० ६९२ । आचा० ३० ।

**त्र्यस्राकर**–यस्मिन्निरन्तरं महामूषास्वयोदल प्रक्षिप्य त्रपुत्पाद्यते स । जीवा० १२३ ।

**त्रसनाम**–त्रसन्ति उष्णाद्यभितप्ता सन्तो विवक्षितस्थानादुद्विजन्ते–गच्छन्ति च छायाद्यासेवनार्थं स्थानान्तरमिति त्रसा–द्वीन्द्रियादयस्तत्पर्यायपरिणतिवेद्यं नामकर्मापि त्रसनाम । प्रज्ञा० ४७४ ।

**त्रसरितन्तुः**–कोसयम् । जीवा० २६६ ।

**त्रायस्त्रिंशग**–मन्त्रिपुरोहितस्थानीया । तत्त्वा० ४–४ ।

**त्रिकल्पपर्युषित**–स्थविरकल्पिको जिनकल्पिको वा ।

आचा० २८०।
त्रिपिटकादिसमयवृत्तय–सामायिका । दश० १२७।
त्रिपुडा– । नि० चू० प्र० १४४ आ।
त्रियाम–पूर्वरात्रमध्यरात्रापररात्रलक्षणो यमाश्रित्य रात्रि स्त्रियामेत्युच्यते। ठाणा० १२८।
त्रिलोकरेखा–आचारायनखण्डनादोषदोषदृष्टान्ते चन्द्रावतमाला पुरिका। पिण्ड० ७६।
त्रिपासरवटक–कुथितस्वस्वभावचलिते दृष्टान्त। जीवा० २८२।
त्रिशला–वर्द्धमानस्वामिन मातृनाम। सम० ८६।
त्रिशूल–शक्ति। सम० १५७।
त्रिशूलानि–वरशस्त्र। जं० प्र० २१२।
त्रुटित–वादित्रम्। जीवा० १६२।
त्रेह–अपस्थाम। प्रज्ञा० २८। दश० १५३। जीवा० २५। उमा। नि० चू० द्वि० ८३ अ।
त्रैराशिक–राशित्रयम्। सूर्य० १४।
त्रैराशिककरण– । प्रज्ञा० ४८०।
त्रैराशिकाः–जीवाजीवनोजीवराशित्रयस्थापका। विशे० ९३३।
त्रैविद्यब्राह्मण–सामशो ब्राह्मण। औप० २०४।
त्रैविद्यवृद्ध–वैदिक। दश० १२७।
त्वगनिका–बाधाविशेष। उत्त० ७८।
त्वक्–छवि। जीवा० ११४। छल्ली। जीवा० १८७।
त्वग्विष–चर्मविष। नंदी० १६३।
त्वचा–त्वग्विशेष। जीवा० १३६।
त्वरितप्राहिणी– । बृ० प्र० ९८ आ।

थ

थंडिल–उच्चारादिदोषवर्जित स्थल मद्रपदट्टाण। नि० चू० प्र० १६२ आ। स्थण्डिल उच्चारभूमि। आव० ५७८। अचित्तभूमी। नि० चू० प्र० ३८ आ। यदुदकेन स्नाता गच्छन्ति येन विश्वमस्यादर्यण्डिलमनू स्थति म स्थण्डिल–क्रोध। सूत्र० १८०।
थंडिल्ल–स्थण्डिल्ल–भूभाग। आव० ६४२। स्थण्डिलम्। आव० ३४८। स्थण्डिल। आव० १६२।
थम–स्तम्भ जात्याद्यभिमानम्। आव० ३४६। स्तम्भ मान। दश० २४२। स्तम्भ। आव० १६६। स्तम्भ मान। आव० ८४८। जात्यादिसमुत्थोऽहङ्कार। उत्त० १५१।
थमण–ग्रीवाया धमण्यादीनां तिष्ठतो वाऽऽत्मनोऽङ्गप्रदेशानां स्तम्भनम्। प्रज्ञा० ३२९।
थमणता–स्तम्भनता स्तम्भनया वा यथा तावदुपविष्टः स्थितो यावत् सुप्त पादादि स्तब्धो जात। ठाणा० २८०।
थमणया–स्तम्भन ऊर्ध्वीकरणम्। औप० ९३। स्तम्भनता–बङ्कगतेद्वितीयो भेद। प्रज्ञा० ३२८। स्तम्भनता–ताव दुपविष्ट स्थितो यावत्सुप्त स्तब्धो जात, हनुयन्त्रादि। आव० ४०५।
थमय–स्तम्भक–आदर्शकगण्डप्रतिबद्धप्रदेश, आदर्शकगण्डानां मुष्टिग्रहणयोग्य प्रदेश। जीवा० २१३।
थमिज्जा–स्तम्भीयात्–स्तब्धो भवेत् मार्दवियर्य। ठाणा० ४७१।
थमुग्गया–स्तम्भोद्गता–स्तम्भोपरिवर्तिनी। जीवा० २२७, ३५६।
थ–निपात। आव० १३७। वाक्यालङ्कारे। ज्ञाता० १४६। निपात पादपूरण। बृ० तृ० १७१ आ।
थवक–स्थितम्। औप० १३२। अवसर। आव० ४००। उत्त० २१४। थवर–धैर्य। विशे० ८५२। काले। नि० चू० प्र० १७८ अ। नि० चू० प्र० ६ आ। प्रस्ताव। व्यव० द्वि० १३६ आ।
थथथारेति–थकथकयेव महता शब्देन करोति। जीवा० २४८।
थवथयकावडिय–अवसर अवसरानुरूपमापतित तद्। पिण्ड० ६३।
थण–स्तनम्। आव० ७६८। स्तनम्। आव० ५७८।
थणदुद्धगयियमुहो–बाल। नि० चू० तृ० ८० आ।
थणियकुमारा–स्तनितकुमारा–भवनपतिभेदविशेष। प्रज्ञा० ९६। स्तनितकुमारा–वर्षास्थानीयरात्रवर्षनादिदर्शयतिनो देवा। भग० १६६।
थणियकुमारीओ–स्तनितकुमार्य वर्षास्थानीयरात्रवन–

निर्देशवर्त्तिन्यो देव्य । भग० १९९ ।
थणियाए- । निरय० ३४ ।
थद्धं-स्तब्ध जात्यादिमदस्तब्ध-कृतिकर्मणि द्वितीयो: दोष । आव० ५४३ । स्तब्ध-सुदृढम् । जं० प्र० २३५ । स्तब्धाय स्वभावत एव मानप्रकृत्या विनयभ्रंशकारिणे । सूर्य० २९६ ।
थपनिका- । दश० २१० ।
थप्पणा-स्थाप्या अवन्दनीया । बृ० प्र० ३०५ अ ।
थरथरंत-कम्पमान । पिण्ड० १६३ । भृश कम्पमान । बृ० तृ० ७१ अ ।
थल-स्थल आकाश । ओघ० ३२ । आकाश । बृ० तृ० १६१ आ । इह कवलप्रक्षेपणाय मुखे विडविते यदाकाश भवति तत् स्थलम् । व्य० द्वि० ३३३ आ । आगाम । नि० चू० प्र० ४६ आ । जलपरिहारेण स्थितो नदी-कूर्परपथ । बृ० तृ० १६२ अ । स्थल-धूल्युच्छ्रयरूपम् । भग० ३०७ ।
थलचर-स्थलचर मनुष्यादिक । दश० ५५ ।
थलपट्टणं-थलेन अस्स भड आगच्छति । नि० चू० द्वि० ७० आ । आनन्दपुराति । नि० चू० प्र० २२६ अ । स्थल-पत्तन-यत्र स्थलपथेन भाण्डानामागमस्तद्, द्वितीय पत्तनम् । प्रश्न० ३८ ।
थलयं-स्थलज कोरण्टकादि । जीवा० १३६ । विचकिलादि । जं० प्र० ३६० ।
थलयर-स्थलचरज पुद्गलविशेष । आव० ८५४ ।
थलयर-स्थले चरन्तीति स्थलचरा । प्रश्न० ४३ ।
थलाइ-स्थलानि तटभूमय. । जं० प्र० १७१ ।
थली-देवद्रोणी । नि० प्र० ७५ आ । नि० चू० द्वि० १४३ आ । बृ० प्र० १६५ अ । स्थलिका-देवद्रोणी । बृ० तृ० ६१ अ, १३० आ ।
थवइय-स्तवकवान् । ज्ञाता० ५ । औप० ७ । स्तवकित सञ्जातपुष्पस्तवकम् । भग० ३७ ।
थवइयाओ-स्तबकिता सञ्जातपुष्पस्तवका । जं० प्र० २५ ।
थवईरयणे-स्थपतिरत्न वर्धकिरत्नम् । जं० प्र० २१० ।
थाइणी-स्थायिनी प्रतिवर्षप्रसविनी वडवा । बृ० द्वि० २२६ अ ।
थाणइल्लग-प्राहरिक । आव० ६६० ।
थाणइल्ला-आरक्षका । नि० चू० द्वि० ११४ आ ।
थाणयं-स्थानम् । आव० ६० ।
थाणु-स्थाणु । जीवा० २८२ ।
थामवं-स्थामवान् बलवान् शीतातपादिसहन प्रति सामर्थ्यवान् । उत्त० ६५ ११० ।
थामो-प्राण । ओघ० १८६ ।
थारुकिणिया थारुकिनिका । जं० प्र० १०१ ।
थाल-स्थाल । जीवा० २३४, २७६ । जं० प्र० ४१० । थाल । जं० प्र० १०१ । स्थाल-अन्त परिधिरूपम् । जं० प्र० २०४ ।
थालइ-गृहीतभाण्डा । औप० ६० । भग० ५१६ ।
थालगं-स्थालक कोशकादि । सूत्र० ३२४ ।
थालपाणए-स्थाल भट्ट सत्पानकमिव दाहोपशमहेतुत्वाद् स्थालपानकम् । भग० ६८० ।
थालिपागाइ-स्थालीपाक । जं० प्र० १२३ ।
थाली-स्थाली । आव० २०० । उखा । जीवा० १०५ । उखा । भग० ३२६ । स्थाली पिठरी । सूर्य० २९३ ।
स्थाली-बृहद्भाजनविशेष । ओघ० १६६ ।
थालीपागो-स्थालीपाक । जीवा० २८१ ।
थालीपागसुद्धं-स्थालीपाकशुद्धं स्थाल्या उखाया पाको यस्य तत्स्थालीपाक, अन्यत्र हि पक्वमपक्व वा न तथाविधं स्यादितीद विशेषण, शुद्ध-भक्तदोषवर्जित, तत कर्मधारयः स्थालीपाकेन वा शुद्धम् । भग० ३२६ । ठाणा० ११७ ।
थालीसंठितो-स्थालीसंस्थित -आवलिकाबाह्यस्य षष्ठं संस्थान, उखा संस्थित । जीवा० १०४ ।
थावग-स्थापक त्रिकल्पभेद । दश० ५७ ।
थावच्चसुता-सार्थवाहवणिया । नि० चू० द्वि० १०४ आ ।
थावच्चा-द्वारवत्या गाथापत्नी । ज्ञाता० १००
थावच्चापुत्ते-थावच्चापुत्र । अनुत्त० ३ । द्वारवत्यां सार्थवाहपुत्रः । ज्ञाता० १०० । अनुत्त० ३ ।
थावते-स्थापयति पक्षमध्येपेण प्रसिद्धव्याप्तिकत्वात् सम-

थयति, यथा परिव्राजकधूर्ते लोकमध्यभागे दत्त बहुफल भवति तस्माहमेव जानामीति मायया प्रतिग्राममन्याय लोकमध्य प्ररूपयति सति तन्निग्रहाय वञ्चित् श्रावको लोकमध्यस्यैकत्वात् कथ बहुषु ग्रामादिषु तत्सम्भव इत्येवविघोपपत्त्या स्वदर्शितो भो लोकमध्यभागो न भवतीति पक्ष स्थापितवानिति स्थापक । ठाणा० २५४ ।

थावर–स्थावर अप्रतिहारिकम् । बृ० द्वि० २४४ आ । स्थावर च यद्ग्रदति न परकीयोपस्करवद् याचित कति पयदिनस्थायि । ओघ० २११ ।

थावरा–उष्णाद्यभितापेऽपि तत्स्थानपरिहारासमर्था सन्त स्तिष्ठन्ती यत्र शीला स्थाव । पृथिव्यादय । जीवा० ६ ।

थासग–स्थासका –दर्पणाकारा अश्वालङ्कारा । ज० प्र० २६५ । स्थासका –दर्पणकारा अश्वालङ्कारविशेषा । ज० प्र० २३५ । स्थासक –आदर्शकाकार । औप० ७० । स्थासक –दर्पण । विपा० ४७ । स्थासक –दर्पणाकार आभरणविशेष । ज० प्र० ५३० ।

थासय–स्थासक दर्पणाकृति स्फुरकास्पि भवति । अनुत्त० ५ ।

थाह–अत्थ णासिया ण बुड्डति त थाह । नि० चू० द्वि० ७८ आ । स्ताघ अर्थात् नासिकाया यत् जल । यत्र नासिका न ब्रुडति तत् स्ताघम् । बृ० तृ० १६१ अ । स्तो घे–अगाधे । विपा० ५७५ । स्ताघ । आव० ३७४ ।

थिइ–स्त्री पुरुषादिर्वा । भग० २५३ ।

थिग्गल–आगारानिर्गमनविवयम् । प्रश्न २६३ । प्रदत्त पतितमस्तूपम् । आचा० ३४१ । ज घरस्स दार पुव्वमासीतपडिपूरिय दार । दारमव सधारवत्त पडिद्वविपय । दश० चू० ७६ आ । थिग्गल चित्त द्वारादि । दश० १६६ । नमम् । भग० । गिम्हे वासागमहूा गवक्सा छिदिहु करेंति । नि० चू० प्र० २३२ आ ।

थिबुअ–बिंदू । नि० चू० प्र० ६७ आ ।

थिबुगो–स्तिबुक उदकबिंदू । आव० ८४५ ।

थिवुय–स्तिबुकम् । प्रश्न० ४११ ।

थिमिओदय–स्तिमितोदक यस्याध कर्मो नास्ति । औप० ६४ ।

थिमित–स्तिमित–स्थिर कायचापल्यादिरहित च । प्रश्न० १३३ । स्तिमित –अन्तकृद्दशाना प्रथमवर्गस्य पञ्चमम ध्ययनम् । अन्त० १ ।

थिमिया–स्तिमिता स्वचक्रपरचक्रादिसमुत्थभयकल्लोलमालावर्जिता । ज० प्र० १४ ।

थिमियमेयणिया–स्तिमितमेदनीका निर्भयत्वेन स्थिरविश्रम्भराभिजनता । प्रश्न० ६६ ।

थिमियमेइणीय–स्तिमितमेदनीक –निभयमेदिनीनिवासि जनम् । प्रश्न० ६२ ।

थिमिया–स्तिमिता भयवर्जितत्वेन स्थिरा । औप० १ ।

थिर–सुप्रतिष्ठान दृढ वा । बृ० द्वि० २४४ आ । दढमघणो । नि० चू० प्र० १६ अ । स्थिर –दृढसहनन । औप० ३४ । स्थिर –असहृयशालावस्थायी । सूत्र० ६ । स्थिर –सहननधृतिभ्या बलवान् । पौन पुन्यकरणेन परिचिता वा कृतयोग । आव० ५६३ । थिरितसघयणहि वलव अहवा दरिसण ण्णचरणाण वा थिरो अचलो यद्य । नि० चू० तृ० १३१ आ । यथास्थितम् । ओघ० १०८ । अप्रकम्प । ज्ञाता० १६ । स्थिर च यद्गदति सुप्रतिष्ठान तत् । ओघ० २११ । स्थैर्य अभ्युपगतापरित्याग । भग०३६ । स्थिर निश्चल । दश० २१६ । स्थिर –धृतिसहननाभ्या बलवान् । व्य० प्र० ११३ अ ।

थिरइ–स्थिरति स्थिरीभवति । व्य० द्वि० १६ आ ।

थिरग्गहत्थे–स्थिरो अग्रहस्तो यस्य स स्थिराग्रहस्त । जीवा० १२१ । स्थिर अग्रहस्त पाटयतोऽस्योऽग्रहस्तो–हस्ताग्र यस्य स । अनु० १७५ ।

थिरपइन्नो–स्थिरप्रतिज्ञ –यो न अवितथकृया करोति । आव० ८६० ।

थिरपरियाडी–स्थिरपरिपाटी स्थिरपरिचितग्रन्थस्य सूत्र न गलति । दश० ५ । स्थिरपरिपाटि, परिचितग्रन्थस्य सूत्रावगलनासम्भवात् । आचा० २ ।

थिरीकरण–स्थिरीकरण–धर्माद् विषादता तत्रैव स्था पनम् । प्रज्ञा० ५६ । स्थिरीकरण–धर्माद्विषीदतां सतां तत्रैव स्थापनम् । दश० १०२ ।

थिरगा–अनन्तकायभेद । भग० ३०० ।

थिल्लि–थिल्ली–वाहनविशेष । उत्त० ४३८ । लाटाना

यदङ्डपल्लाण रूढ तद यविषयेषु थिल्लीत्युच्यते । अनु० १५८ । वेसरादिद्वयविनिर्मितो यानविशेष । ज० प्र० १२३ । थिल्ली-वेगसराद्वयविनिर्मितो यानविशेष । सूत्र० ३३० । थिल्ली-लाटाना यदश्वपल्यान तदन्यविषयेषु थिल्लीत्युच्यते । भग० १८७, २३७ । लाटाना यद् अड्डपल्लाण हड तदन्यविषये थिल्लिरित्युच्यते । जीवा० २८२ ।

थिल्लीओ-लाटाना यानि अड्डपल्यानानि तान्यन्यविषयेषु थिल्लीओ । भग० ५४७ ।

थिवत्ता- । भग० ८०४ ।

थिविथिवत-गुजन् । रा० । अतिशयेन । रा० ।

थिर्वाथिवित-अनुकरणशब्दोऽयम् । विपा० ७४ ।

थिचोरो-स्त्रिया सकाशात् स्त्रियमेव वा चोरयति स्त्रीरूपो वा यश्चौर स स्त्रीचौर । प्रश्न० ४६ ।

थीण-स्त्यानर्द्धि स्त्याना-चैतन्यर्द्धिर्यस्या सा स्त्याना । आव० ८४ । इद्ध चित्त त थीण । नि० चू० प्र० ३६ अ ।

थीणद्धी-स्त्याना-पिण्डीभूता ऋद्धि-आत्मशक्तिरूपा यस्या स्वापावस्थायां सा स्त्यानर्द्धि । प्रज्ञा० ४६७ । इद्ध चित्त त थीण जस्स अच्चत्त दरिसावरणकम्मोदया सा थीणद्धी । नि० चू० प्र० ३६ अ ।

थीणा-स्त्याना-पिण्डीभूता । प्रज्ञा० ४६७ ।

थीणागेद्धी- । ठाणा० ४४७ ।

थीपरिण्णा-स्त्रीपरिज्ञा-सूत्रकृताङ्गाद्यश्रुतस्कन्धे चतुर्थमध्ययनम् । आव० ६५१ । उत्त० ६१४ ।

थीपुरिससजोए-अशुचिस्थानभेद । प्रज्ञा० ५० ।

थीविलोअण-स्त्रीविलोचन तैतिलमिति वा, चतुर्थ मरणम् । ज० प्र० ४९३ ।

थीहू-अनन्तकायभेद । भग० ३०० । कन्दविशेष । उत्त० ६९१ । भग० ८०४ ।

थुंडइ-गुच्छाविशेष । प्रज्ञा० ३२ ।

थुई-स्तुति । आव० ७९९ ।

थुड-स्कन्ध । राज० ६ ।

थुरग- । भग० ८०२ ।

थुल्ल-स्थूल । ओघ० २१६ ।

थुल्लतो-स्थूर । उत्त० ३२५ ।

थुल्लसमणओ-स्थूलश्रमणक गौतम । आव० २८७ ।

थुव्वति-स्तूयन्ते-अभिष्टूयन्ते अभिनन्द्यते । भग० ६७० ।

थूण-लेप । नि० चू० प्र० ३३६ ■ ।

थूणा-वेली । नि० चू० द्वि० ८३ आ । स्थूणा । प्रज्ञा० २६३ । स्थूणा नगरी । आव० १७१ । स्थूणा-ऊर्ध्वतिर्यक्करणयोगात्सङ्घातशाटविरहादुभयशून्या । आव० ४६२ ।

थूणाति- । व्य० प्र० १७ आ ।

थूणादि- । नि० चू० द्वि० ११६ आ ।

थूणामडव-स्थूणाप्रधानो वस्त्राच्छादितो मण्डप स्थूणामण्डप । ज्ञाता० ९३ ।

थूभ-स्तूपम् । ओघ० १३ । स्तूप-पीठविशेष । ज० प्र० १२३ । इट्टगादिचिया चिच्चा थूभो । नि० चू० प्र० १९२ अ । स्तूप-चितिविशेष । प्रश्न० ८ । स्तूप-चैत्यस्तूप । राज० १२१ ।

थूभकरड-स्तूपकरण्ड ऋषभपुरे उद्यानम् । विपा० ९४ ।

थूभमहो-स्तूपमह स्तूपसत्क उत्सव । जीवा० २८१ । आव० ३२८ ।

थूभसठिओ-स्तूपसस्थित । जीवा० २७९ ।

थूभा- । भग० २३७ ।

थूभिदे-स्तूप-पारिणामिकबुद्धौ एकविंशतितमो दृष्टान्त । नदी० १६५ ।

थूभिया-स्तूपिका शिखरम् । राज० ३६ ।

थूभियाए-स्तूपिका-शिखरम् । ज० प्र० ४७ । जीवा० ३७१ । प्रज्ञा० ९९ । सूर्य० २६४ । स्तूपिका-लघुशिखररूपा । जीवा० २०५, ३६० ।

थूभियागे-स्तूपिका लघुशिखररूपा । ज० प्र० ४६ ।

थूलते-उच्चारपरिणामि । रा० ।

थूल-स्थूल अत्यन्तमासलोऽय मनुष्यादि । दश० २१७ । स्थूल-एरण्डकाष्ठादि । दश० १४७ ।

थूलग-परिस्थूलवस्तुविषयोऽतिदुष्टविवक्षासमुद्भव स्थूल । आव० ८२० ।

थूलभद्द-अन्तिमचतुर्दशपूर्वधर । नि० चू० तृ० १४६ आ । स्थूलभद्र-स्त्रीपरीषहे दृष्टान्त । उत्त० १०४

योगसंग्रहे–शिक्षादृष्टान्ते कल्पकवंशप्रसूतस्य नवमनन्दराजमन्त्रिशकटालस्य ज्येष्ठ पुत्र य शिक्षायोगवान् आचार्यो जात । आव० ६७० । सभूअस्य सीसो । नि० चू०प्र०२४३ अ । स्थूलभद्र–बहुश्रुतआचार्यविशेष । उत्त० १३० । स्थूलभद्र –कल्पकवंशप्रसूतशकटालज्येष्ठपुत्र । आव० ६६३ । त्रिया अजेया मुनि । मर० ।
थूलभद्दसामी–स्थूलभद्रस्वामी । आव० ४२५ ।
थूलवया–स्थूल–अनिपुण यतस्तनो भावितया वचो यस्य स स्थूलवचा । उत्त० ४९ ।
थूला–स्थूला । आव० ८५५ ।
थूलेतरो–स्थूलेतर –इहलोकगुणविषये व्यन्तरविशेष । आव० ८२४ ।
थूल्ल–स्थूलम् । आव० ६० ।
थूह–स्तूपम् । आव० ५०२ ।
थेज्जे–स्थैर्यधर्मयोगात् स्थैर्य । भग० १२२ ।
थेर–प्रवृद्धशरीरे विसेसेण जुण्णसरीरे । नि० चू० द्वि० ६५ अ । स्थविर –यो गच्छस्य मर्यादां करोति । जाति-(जन्म)श्रुतपर्यायैर्वा स्थविर । दश० ३१ । स्थविर – सीदतां स्थिरीकरणहेतु । दश० २४२ । स्थविर –श्रुतपर्यायवृद्ध । प्रवचनगुरु । दश० २८४ । स्थविर – जातिश्रुतपर्यायभेदभिन्न । आव० ११६ । चरणादिएहिं दमणातो परीसहोवसग्गेहिं वा चरणातो अतिचरमाइ पच्चित्तदाणेण वा भग्गतो ■ थाविज्जति सो थिरो । नि० चू०तृ०१४३ आ । स्थेर आचार्यो गुरुर्वा । आव०६५४ । स्थविर –स्थविरकल्पिक । ओघ० १६५ । धर्मपरिणत्या नितृत्तासमञ्जसप्रवृत्तिरामति । स्थविर इव स्थविर, परिणतसाधुभाव आचार्य । जीवा० ४ । स्थविर । प्रज्ञा० ३२७ । श्रुतादिभिर्वृद्धत्वात् स्थविर । ज्ञाता० ७ । स्थविर –श्रुतवृद्ध । भग० १३६ । जातिश्रुतपर्यायभेदभिन्ना स्थविर । ज्ञाता० १२३ । स्थविर – गणधर । दश० २६६ । स्थविर –महावीरजिननिग्रन्थश्रुतवृद्ध । भग० १०० । सीदमानान् साधून् ऐहिकामुष्मिकापायप्रदर्शनतो मोक्षमार्गे स्थिरो करोतीति स्थविर । व्य० प्र० १७२ अ । प्रवर्तितव्यापारितेष्वर्थेषु यो यत्र यति सीदति सत् विद्यमान बल यस्य स सद्बल तथाभूत सन् प्रचोदयति प्रकर्षेण शिक्षयति स स्थिरकरणात् स्थविर । व्य० प्र० १७२ अ । स्थविर –गच्छवासि साधु । विशे० ८ । स्थविर –एकसप्तत्यादिवर्ष: । व्य० प्र० २४५ ।
थेरकंचुइज्ज–स्थविरकञ्चुकी–अन्त पुरप्रयोजननिवेदक प्रतीहारो वा । भग० ४६० ।
थेरकप्पट्ठित–स्थविरकल्पस्थित । आव० २६२ ।
थेरा–स्थविरा–गच्छवासिन । बृ० प्र० २३० अ । आयरिया । नि० चू० प्र० ३०८ अ । आचार्य । बृ० द्वि० ११२ आ । स्थविरा –आचार्या । बृ० द्वि० २६० आ । स्थविरा –श्रुतवृद्धा गीतार्था । विशे० ६३८ । आचार्या – वय श्रुतपर्यायस्थविरा । भग० १७५ ।
थेरी–मज्जणीविसेसा । नि० चू० प्र० १३२ आ । स्थविरा । आव० २२० ।
थेरोवघाई–स्थविरा –आचार्यादिगुरव तानाचारदोषेण-शीलदोषेण च ज्ञानादिभिर्वोपहन्तीत्येवंशील स एव चेति स्थविरोपघातिक । सम० ३७ । स्थेरोवघाती– आचार्योपघाती, षष्ठमसमाधिस्थानम् । आव० ६५३ ।
थेहवण–उगदर्दनम् । बृ० प्र० २४१ आ । ’
थेहा–ददद्रूण । नि० चू० द्वि० ६३ आ ।
थोर–स्थूल । ज्ञाता० ६८ ।
थोवदे–स्तोक ददस्व–स्वल्प प्रयच्छ । ओघ० ६७ ।
थोव–स्तोकम् । भग० २८ । स्तोक–स्वल्प । आव० ४६८ । स्तोक गणना प्रमाणतो हीन तुच्छो वा । विशे० १०३७ । स्तोक –सप्तप्राणप्रमाण । भग० २११ । स्तोक –सप्तप्राणा उच्छ्वासा य इति गम्यत स स्तोक । भग० २०६ । सप्तप्राणा उच्छ्वासनि श्वास य इति गम्यते स स्तोक । ज० प्र० ६० । सप्तोच्छ्वासरूप । ज्ञाता० १०४ । सप्तानप्राणप्रमाण स्तोक । सूर्य० २६२ । स्तोक –सप्तप्राणा एव स्तोक । जीवा० ३४४ ।
थोवय–स्तोकका –चातका । ज्ञाता० २७ ।
थोवायसेस–स्तोकावशेषा –कालवेला वृद्धादावयेषा । आव० ७१२ ।
थोवेति– । ठाणा० ८५ ।

## द

दंड-प्राणिनो दण्डयतीति दण्ड परितापकारी । आचा० २७४ । दण्डनं दण्ड अपराधिनामनुशासनम् । ठाणा० ३९९ । सुमाधकरणम् । ओघ० २०२ । दण्डन दण्ड – अतिपातात्मक । उत्त० २९३ । आत्मा अपराधे दण्डन वा मन्य वा । ठाणा० ३४३ । विनाशनम् । मम० २५ । बाहुल्यमाणो । नि० चू० प्र० १२३ आ । अप राधानुसारेण राजग्राह्यं द्रव्यम् । भग० ५४४ । दण्ड – ऊर्ध्वाधआयत शरीरबाहल्यो जीवप्रदेश । ज० प्र० २७१ । दण्ड – दण्ड इव दण्ड ऊर्ध्वाधआयत शरीरबा हल्यो जीवप्रदेशकर्मपुद्गलसमूह । भग० १५४ । ज्ञाता० ३४ । तथाविधपरिक्लेशे घ्नहरणादिको दण्ड । ज्ञाता० ११ । दण्ड वा–प्रादि । वृष्यराभिघात । उत्त०३६४ । दण्डिक । आव० ३९९ । दण्ड इव दण्ड – ऊर्ध्वाधआयत शरीरबाहल्या जीवप्रदेशसमूह । जीवा० २४४ । दण्ड । सामा यग्रामाधिप । आव० ८१९ । दण्डयति पीडामुत्पा दयतीति दण्ड – दु खविशेष । सूत्र० १३२ । शरीरघन घोरपहार । विपा० ६५ । दण्डयतीति दण्ड –पापोपा दानसंकल्प । सूत्र० ३०६ । दण्डनायक । विपा० ६१ । बृ० तृ० २३६ आ । दण्ड योगसंग्रहे आपत्सु दृढधर्मत्व दृष्टान्ते अनगारविशेष । आव०६६७ । यमुनावक्र ऋषि । म० । प्राणघातसहो मुनि । मर० । प्रायश्चित्तम् । व्य० द्वि० १७२ अ । दण्ड । प्रश्न० ५८ । दण्डिक – राजदण्ड धारी द्वारपालक । उत्त० १७६ । दण्डक । ओघ० २१८ । आव० २७३ । चतुर्हस्तमान । अनु० १५४ । दण्ड – सङ्घट्टनपरितापनादिलक्षण । दश० १४३ । यथापराध राजग्राह्य द्रव्यम् । ज० प्र० १६४ । दण्ड –उत्काल । पिण्ड० १० । दण्ड –षण्णवत्यङ्गुलप्रमाण । भग० २७५ । दण्डो हि चतु कर उक्त करश्चतुर्विंशत्यङ्गुल एव चतु विंशतौ चतुर्गुणिताया षण्णवति स्यादेवेति । सम० ९८ ।

दंडई-कुम्भकारकडे नगरे राया । बृ० द्वि० १५३ अ ।

दंडईरण्णो-दण्डकीराजा-जितशत्रुराजजामाता । उत्त० ११४ ।

दंडए-दण्डक । ओघ० २१७ ।

दंडिओ-नृप । बृ० प्र० ३१३ अ ।

दंडकारण्य-अरण्यविशेष । प्रश्न० ८७ ।

दंडग-चित्रलतादण्डकं । ओघ० ५५ ।

दंडगपमज्जणी-दण्डकप्रमार्जनी-वसतिप्रमार्जनाय रजोहर णविशेष । बृ० द्वि० २५३ अ ।

दंडणायग-दण्डनायक –तन्त्रपाल । राज० १४० । दण्ड- नायका –तन्त्रपाला । ज० प्र० १९० ।

दंडणीई-दण्डनीति सामादिश्चतुर्विधा । ज० प्र० २५९ ।

दंडनायए-दण्डनायक –तन्त्रपाल । औप० १८ ।

दंडनायक-प्रतिनियतकटकनायक । प्रश्न० ७६ ।

दंडनायग-दण्डनायक –तन्त्रपालक । भग० ४६३ । तन्त्रपाल । भग० ३१८ । आरक्षक । दश० १६६ ।

दंडनिक्खेवो- । आचा० ३२० ।

दंडनीई-दण्डनीति हक्कारमक्कारधिक्कारभेदभिन्ना । आव० ११३ ।

दंडनीति-दण्डन दण्ड –अपराधिनामनुशासन तत्र तस्य वा स एव वा नीति –नयो दण्डनीति । ठाणा० ३९८ ।

दंडपयारो-दण्डप्रचार सैन्यविचरण । दण्डप्रकारो वा आज्ञाविशेष । प्रश्न० ७४ ।

दंडपरिहार-महती जीर्णकम्बलिका । बृ० द्वि० ११३ अ ।

दंडपहो-दण्डपथ गोदण्डमार्ग लघुमार्ग प्रमुखोऽवलो वा । सूत्र० २३४ ।

दंडपासगो दंडपाशक –तत्कालिक । ओघ० ८६ ।

दंडप्पयारा-दण्डप्रकार आज्ञाविशेषो नीतिभेदविशेषो वा । दण्डप्रचारा –सैन्यविचरणम् । सम० ११३ ।

दंडफरुस-दंडपारुष्य व्यसन अनपराधे स्वल्पे वापराधे अत्युग्रदण्ड निवर्तयति तत् । बृ० प्र० १५७ अ ।

दंडमडभोइओ-दण्डभटभोजिक । आव० ३४४, ३७८ ।

दंडमाईया-दण्डादिका–धरणिपात-भुजाङ्कुयुद्धप्रभृतय । पिण्ड० १३० ।

दंडय-दण्डकि –कुम्भकारकृतनगर राजा । व्य० द्वि० ४३२ अ ।

दंडयगहियग्गहत्थो–गृहीतदंडाग्रहस्तः । उत्त० १३५ ।
दंडयत्ता–दंडयात्रा । आव० ३७८ ।
दंडरक्खो–दण्डरक्ष । आव० ४०१ ।
दंडरयणे–चक्रवर्तिनश्चतुर्थं रत्नम् । ठाणा० ३६८ ।
दंडवई–कटुकृतगोष्ठीदण्डोद्ग्राहक । बृ० द्वि० १६१ अ ।
दंडवासत्थाणं–दण्डावासस्थानम् । आव० ६७१ ।
दंडवासिया–गामिया । नि० चू० प्र० १६४ अ ।
दंडविरिए–दण्डवीर्यं–पुरुषयुगे दृष्टान्तः । ठाणा० ४३० ।
दंडसंपुच्छणि–दण्डसंपुञ्छनी–दण्डयुक्ता सम्मार्जनी । ज० प्र० ३८८ ।
दंडसमादाणे–समादीयते कर्म्म एभिरिति समादानानि कर्मोपादानहेतव, दण्डा एव मनोदण्डादय प्राणव्यपरोपणाध्यवसायरूपा समादानानि दण्डसमादानानि । जीवा० १२१ ।
दंडायतिते–दण्डायतिक –प्रसारितदेह । ठाणा० २९७ ।
दंडाविपणगं–दवविदवपट्टिवियट्टिनालिवाल्प दडादिपञ्चकम् । बृ० द्वि० २५३ अ ।
दंडायतिते–दण्डायेवायति –दीर्घत्व पादप्रसारणेन यस्य स दण्डायतिक । ठाणा० २९९ ।
दंडिअ–दण्डिक । आव० ६१, ६३६ ।
दंडिणा–राजकुलानुगता । बृ० प्र० ६५ अ ।
दंडिपडवसणं–दण्डिखण्डवसनम् । विपा० ७४ ।
दंडिय–दण्डिक । औप० ११८ । आव० ७३८ । उत्त० १३६ । दंडिए–भरतपति । व्य० प्र० ६३ आ ।
दंडिया–दण्डिका–मुद्रा । बृ० प्र० ३३ आ । दण्डिका–अन्ययात्रानः । औप० ११६ ।
दंडी–दण्डी–कृतसन्धान जीर्णवस्त्रम् । ज्ञाता० २०० ।
दंडीयपइ– । व्य० द्वि० १५२ अ ।
दंडेइ–नरदाववधविशेष दण्ड । पण्णवतिरङ्गानि । ज० प्र० ६४ ।
दंत–दान्त–य इन्द्रियनोइन्द्रियाणि दमयति । दशा० १५३ । दान्त –उपशम नीत । ज्ञाता० ७० । दश० ११६ । दन्त । आव० १६२ । गजादीनां दन्ता । दश० १६१ । दान्त–क्रोधादिदमनाद्दमयन्तो वा रागद्वेषयोरन्तार्थं प्रवृत्तत्वात् । भग० १२३ । दान्त–दमं ग्राहित, असमञ्जसचेष्टया व्यावर्णित । उत्त० ५३ । गुरुभिर्दमं ग्राहित विनयित । औप० ३३ । दान्त–इन्द्रियनोइन्द्रियदमनेन दान्त । सूत्र० २६८ ।
दंतकम्मे–दन्तकर्म–गजविषाणविषया रूपनिर्माणक्रिया । प्रश्न० १६० ।
दंतकम्माणि–दन्तकर्माणि–दन्तपुत्तलिकादीनि । आचा० ४१४ ।
दंतकारे–शिल्पभेद । अनु० १४९ ।
दंतखज्जयं–मोदगामोदवट्टिमादी । नि० चू० तृ० ३७ आ ।
दंतचक्को–दंतपुरणगरे राया । नि० चू० तृ० १२८ अ । दन्तपुर नृप । व्य० प्र० १०७ अ । दन्तचक्र, द्रव्यव्युत्सर्गे दन्तपुरनरेश । आव० ७१७ । दन्तचक्र, योगसग्रहे निरपलापदृष्टान्ते दन्तपुरनगराधिपति । आव० ६६६ । दन्तचक्रो दन्तपुरनृपति । उत्त० ३०१ ।
दंतनिवाय–दन्तनिपात –दशनच्छेदविधि, मप्राप्तकामस्य षष्ठो भेद । दश० १९४ ।
दंतपहोयणा–दन्तप्रधावन अङ्गुल्यादिना क्षालनम् । दश० ११७ ।
दंतपुरं–दन्तपुर द्रव्यव्युत्सर्गे नगरम् । आव० ७१७ । दन्तपुरं–योगसग्रहे निरपलापदृष्टान्ते दन्तचक्रराजो नगरम् । आव० ६६६ । नगरविशेषो । नि० चू० तृ० १२८ अ । दंतवक्कगयाए नगर । व्य० प्र० १०७ अ । दन्तपुर–दन्तचक्रराजधानी । उत्त० ३०१ ।
दंतमणि–दन्तमणिः–प्रवालस्तम्भ, हस्तिप्रभृतीनां दन्तो वा मणि । प्रश्न० १२३ ।
दंतमाला–दन्तमाला भरते द्रुमगणविशेष । ज० प्र० ९८ । एकोरुकद्वीपे वृक्षविशेषः । जीवा० १४५ ।
दंतवक्के–दान्ता–उपशान्ता यस्य वाक्येनैव शत्रव स दान्तवाक्य चक्रवर्त्ती । सूत्र० १५० ।
दंतवण–दन्तवनम् । औप० १७२ ।
दंतवाणिज्ज–दन्तवाणिज्य–हस्तिदन्तादिक्रयविक्रयक्रिया । आव० ८२६ ।
दंतवेयणा–दन्तवेदना–दशनपीडा । भग० १६३ ।
दंतारा–शिल्पार्यभेद । प्रज्ञा० ५६ ।

दताला- । नि० चू० प्र० २२ अ ।
दतिक्क-पुण्णो तदुलोट्टो । नि० चू० तृ० ३६ आ । तदुला, सव्व वा दतखज्जय । नि० चू० तृ० ३७ अ । मोदकादिक दन्तखाद्य तन्दुलचूर्णो वा। मोदकमण्डकादिक यद्बहुविध दन्तखाद्यक तद्दन्तिकम् । बृ० द्वि० १२६ अ । तन्दुलचूर्ण । बृ० द्वि० १२६ अ ।
दतिक्कचूण्ण-तन्दुललोट्ट । बृ० द्वि० १२६ अ ।
दतिचडोण- । भग० ८०४ ।
दतिलग-दन्तुर । आव० २११ ।
दंतलिया-दन्तिलिका-स्कन्ददासी । आव० २०१ ।
दती-साधारणबादरवनस्पतिकायविशेष । प्रज्ञा० ३४ ।
दतुक्खलिय-फलभोजी । औप० ६० । भग० ५१६ । फलभाजिन । निरय० २५ ।
दत्ते-ददति । पिण्ड० १६२ ।
दद्दिखडो-दण्डोखण्ड । आव० ४२६ ।
दद्दा:-चतुरिन्द्रियजीवविशेष । प्रज्ञा० २३ ।
दष्ट्रा-आशी । प्रज्ञा० ४७ । क्षुल्लहिमवद्दृष्ट्रा । जीवा० १४५ ।
दस-दर्शन दर्श । विशे० ५६१ । आव० ८२ । पञ्चम परिग्रह । आव० ६५६ ।
दसण-दर्शन-स्वस्वविषये सामान्यग्रहण रूपसामान्यग्रहण परिणाम् । प्रज्ञा० ५२७ । दसन-रूपम् । ज्ञाता० ११ । सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोध । प्रज्ञा० ४५३ । दशन-आकार । जीवा० २०७ । दशन सम्यग्दर्शनम् । आव० ५८० । दश० १०१ । ओघ० ६ । दशनम् । आव० ७६३ । दर्शन-सामान्यविशेषात्मके वस्तुनि सामान्यावबोध रूपसामान्यपरिच्छेद । जीवा० १८ । दशन-सम्यक्त्वम् । ठाणा० ६५ । भग० ५१ । दशन-वर्णादिपरिणतसूत्रानुसार । दश० १७७ । दशन-प्रस्यातुर्दृष्टिपथः । ज० प्र० २६२ । दशन-सामान्योपलब्धिरूप चक्षुरचक्षुरवधिकेवलाख्यम् । आचा० ६८ । दर्शनप्रतिमा श्रावकस्य प्रथमा प्रतिज्ञा । आव० ६४६ । दशन-रुचिरूप आत्मन परिणाम । भग० ३५० । अनुभवनम् । भग० ७१० । ईहावग्रहो हि दर्शन-सामान्यग्राहकत्वात् अवग्रहम् । ठाणा० २३ । दृश्यन्ते श्रद्धीयन्ते पदार्था अनेनास्मादस्मिन् वेति दशन-दर्शनमोहनीयस्य क्षय क्षयोपशमो वा दृष्टिवा दशन-दर्शनमोहनीयक्षयाद्याविर्भूततत्त्वश्रद्धानरूप आत्मपरिणाम । ठाणा० २४ । दृष्टि-रुचिस्तत्त्वानि प्रति । ठाणा० ३० । शुद्धाशुद्धमिश्रपुञ्जत्रयरूप-मिथ्यात्वमोहनीयम् । ठाणा० १५१ । अभिप्रायो यदि वा दृश्यते यथावस्थित वस्तुतत्त्वमनेनेति दर्शन उपदेश । आचा० १७१ । अभिप्राय । आचा० २२७ । दर्शन-रूपम् । निरय० ४ । राज० ११ । दर्शनम् । ठाणा० ३३७ । प्रमेयस्य परिच्छेदनम् । भग० ६५६ । दर्शन-क्षायिक भावापन्न सम्यक्त्वम् । ज० प्र० १५१ । सेवनम् । बृ० प्र० २०३ अ । दृश्यते तत्त्वमस्मिन्निति दर्शनम् । उत्त० ५५६ । दृष्टिदशन-तत्त्वेषु रुचि । ठाणा० ४८ । दर्शन-प्रकाशन उपनिबन्धनम् । सम० ११६ । आकार । ज० प्र० ५२ ।
दसणकसायकुसील-दर्शनमाश्रित्य कषायकुशीलो दर्शनकषायकुशील । भग० ८९० ।
दसणपक्खो-दशनपक्ष-योऽप्रत्याख्यानकषायोदयवति श्रावके भवति । आव० ५३३ ।
दसणपरीसह-दर्शन-सम्यग्दर्शन, सहन चास्य क्रियादिवादिना विचित्रमतश्रवणेऽपि निश्चलचित्ततया धारणम् । सम० ४० । दर्शनपरीषह-दर्शन-सम्यग्दर्शन तदेव क्रियाक्रियावादिना विचित्रमतश्रवणेऽपि सम्यक् परिषह्यमाण निश्चलचित्ततया धार्यमाण परीषह, दर्शन दर्शनव्यामोहहेतुरैहिकामुष्मिकफलानुपलम्भादि स एव परीषह । उत्त० ८३ ।
दसणपुलाए-दर्शनमाश्रित्य पुलाकस्तस्यासारताकारी विराधको दर्शनपुलाक । भग० ८९० ।
दसणपुलाते-कुदृष्टिसंस्तवादिभिर्दर्शनपुलाक । ठाणा० ३३७ ।
दसणबलिया-परस्परसौम्यदर्शना । औप० २८ ।
दसणमोहनिज्ज-दर्शन मोहयतीति दर्शनमोहनीय मिथ्यात्वमिश्रसम्यक्त्वभेदम् । ठाणा० ६७ ।
दसणवापन्नग-दर्शन-सम्यक्त्व व्यापन्न-भ्रष्ट यस्य स दर्शनव्यापन्नक-निह्नव । भग० ५१ ।

दंसणविणए-दर्शनविनय-सम्यग्दर्शनगुणाधिकेषु शुश्रूषादिरूप । भग० ९२४ ।
दंसणविणय-दर्शनविनय विनयस्य प्रथमो भेद । दश० ३१ । श्रद्धान कर्म विनयति यस्माद् दर्शनविनय, दर्शनाद्विनय दर्शनविनय । दश० २४१ ।
दंसणसंकिलेसे-दर्शनस्य सङ्क्लेश -अविशुद्ध्यमानता स दर्शनसङ्क्लेश । ठाणा० ४८९ ।
दंसणसावए-दर्शन-सम्यक्त्व तत्प्रतिपन्न. श्रावको दर्शनश्रावक श्राद्धाना प्रथमा प्रतिमा । सम० १९ ।
दंसणा-दर्शना-उपदर्शका । सम० ११६ ।
दंसणायारे-दर्शन-सम्यक्त्व तदाचारो-निःशङ्कितादिरष्टधा दर्शनाचार । ठाणा० ३२५ ।
दंसणिंदे-दर्शनेन्द्र -क्षायिकसम्यग्दर्शनी । ठाणा० १०४ ।
दंसणिज्ज-दर्शनीय-द्रष्टु योग्य, दर्शनेन तृप्तिरसम्भवात् । सूय० २६४ । दर्शनीय दर्शनयोग्यम् । प्रज्ञा० ८७ । आदेयदर्शन । ज्ञाता ३५ ।
दंसणिड्ढी-दर्शनर्द्धि प्रशमादिरूपा । दश० ११३ । दर्शनर्द्धि -प्रवचने निःशङ्कितादित्व प्रवचनप्रभावकशास्त्रसम्पदा । ठाणा० १७३ ।
दंसणेण अइयट्ठए-भद्रदर्शन । ज्ञाता० २२० ।
दंसमसग-दंशाश्च मशकाश्च दंशमशका, उभयेऽप्येते चतुरिन्द्रिया महत्त्वामहत्त्वकृतभेदा विशेषोऽथवा दंशो दशनभक्षणमित्यर्थ, तत्प्रधाना मशका दंशमशका । पञ्चम परीषह । सम० ४१ ।
दंसिज्जंति-उपमामात्रत दर्श्यन्ते । सम० १०९ ।
दंसिय-दर्शिता-श्रवणगोचर नीता उपदिष्टा । प्रज्ञा० ४ ।
दंसेइ-तदभिधेयप्रत्युपेक्षणादिक्रियादर्शनेन दर्शयति । भग० ७११ ।
दंसेंति-तदभिधेयप्रत्युपेक्षणादिक्रियादर्शनेन दर्शयति । ठाणा० ५०२ ।
दइअ-दतिक । अनु० १५२ ।
दइउ-दतिउ-चर्मखल्लाउडुओ जेण तरिज्जइ । ओघ० ३३ ।
दइए-दृतिक । ठाणा० ३३९ । दयित -वल्लभ । उत्त० ४५१ ।
दइओ-ऊर्ध्वमपाटितेनापनीतमस्तकेन निकर्षितचर्मान्तर्वर्त्तिसर्वास्थ्यादिकचवरेणापरचर्ममयरियागलकस्थगितापानच्छिद्रेण सङ्कीर्णमुखीकृतग्रीवा-तद्विवरेणाजापश्चोर-यतस्य शरीरेण निष्पन्नश्चर्ममय प्रसेवक कोत्थलकापरपर्यायो दृति । पिण्ड १८ ।
दइत-दयित -वल्लभ । ज्ञाता० १६७ ।
दउदरे-दकोदर-जलोदरम् । ज्ञाता० १८३ ।
दओघंसि-उदकौघे वा गङ्गादिनामुत्तार्गगामिवेनागच्छति सति तेन प्लाव्यमानानामित्यर्थ । ठाणा० ३०९ ।
दओदराइ-दकोदर-जलोदरम् । ज० प्र० १२५ ।
दकभवण-उदकभवन-उदकगृहम् । आचा० ३४१ ।
दकरय-दकरज -उदककण । जीवा० २७२ ।
दकवारकः-भाजनविधिविशेष । जीवा० २६६ ।
दक्ख-दक्षस्य भावो दाक्ष्य-अविलम्बितकारित्वम् । उत्त० ४९ । सिग्घ करेति । नि० चू० प्र० ३३२ आ । ठाणा० ३०२ । दक्ष -कार्याणामविलम्बितकारी । औप० ९५ । जीवा० १२२ । ज० प्र० ३८८ । शीघ्रकारी । अनु० १७७ । भग० ६३१ । दक्ष -उत्तरस्याना धरणेन्द्रस्य पादत्राणीकाधिपति औत्तराहाणा बलिवर्ज्जितानां दक्षो नाम्ना पदातिपति । ज० प्र० ४०८ ।
दक्खत्त-दक्षत्व-आशुकारित्वम् । आव० ३४६ । उत्त० १४४ ।
दक्खिण-दक्षिणा । आव० २०० ।
दक्खिणकूलग-यैर्गङ्गाया दक्षिणकूल एव । भग० ५१९ । दक्षिणकूलक यैर्गङ्गाया दक्षिणकूल एव वस्तव्यम् । औप० ९० ।
दक्खिणकूला-यैर्गङ्गादक्षिणकूल एव वस्तव्यम् । निरय० २५ ।
दक्खिणा-दक्षिणा । आव० ६३० । दक्षिणा-दक्षिणमथुरा । आव० ६८८ ।
दक्खिणावहो-दक्षिणापथ । आव० १७४ । बृ० द्वि० २२७ अ । दक्षिणपथ-दक्षिणदिग्विभाग । आव० ९९ ।
दक्खिण्णे-दक्षिणा । उत्त० २८६ ।
दक्खु-पश्यतीति पश्य-सर्वज्ञ । दक्षो वा निपुण । सूत्र०

७३ । द्रष्टा-अतीतानागतव्यवहितसूक्ष्मपदार्थदर्शी । सूत्र० ७४ ।

**दक्षिण**-दक्षिणपार्श्वनियुक्तत्वादनुकूलगुणत्वाद्वेति । ठाणा० २१६ । दक्षिणत्व-सरलत्वम्, पञ्चत्रिंशद्वचनातिशये षष्ठ । सम० ६३ ।

**दक्षिणपूर्व**-आग्नेयकोण । सूर्य० २२ ।

**दक्षिणा**-दानम् । विशे० १२५० ।

**दगगुलिगा**-वकी । नि० चू० प्र० ४५ आ ।

**दग**-अष्टाशीतौ महाग्रहे त्र्यस्त्रिंशत्तम । ज० प्र० ५३५ । ठाणा० ७६ । दक-अप्काय । आव० ५७३ । उदकम् । प्रज्ञा० ३६१ । उदक-जङ्घार्द्धप्रमाणम् । ओघ० ३२ । पानियघर प्रवादि । नि० चू० तृ० १० आ । उदक-जङ्घार्द्धप्रमाणम् । ओघ० ३२ ।

**दगकलस**-दककलशम् । ज० प्र० ३८६ ।

**दगकुम्भय**-दककुम्भकम् । ज० प्र० ३८६ ।

**दगगब्भा**-दकस्य-उदकस्य गर्भा इव गर्भा दकगर्भा-कालान्तर जलवर्षणस्य हेतवस्तत्सूचका इति तत्त्व मिति । ठाणा० २८७ ।

**दगघट्टो**-जत्थ अद्धजघा जाव उदग । नि० चू० प्र० ३४१ आ ।

**दगच्छड्डणमत्तए**-उदकप्रतिष्ठापनमात्रक-उपकरणधावनोदकप्रक्षेपस्थानम् । आचा० ३४० ।

**दगतीर**-दगब्भास । नि० चू० प्र० २६५ अ । सिचनवीचिस्पृष्टानि न नयनदृष्टपूराणि मनुष्यादिस्थान त्ववश्य सिचनवीचिस्पृष्टलक्षणानि दगतीरम् । मनुष्यास्त्रियो वा अलार्थिन आगच्छन्ति साधू यत्र स्थित दृष्ट्वा तिष्ठन्ति निवर्त्तन्ते वा तद्दकतीरम् । वृ० द्वि० ३० अ ।

**दगतुंडो**-दकतुण्ड पक्षिविशेष । प्रश्न० ८ ।

**दगतूर**-उदक मुरवादितूर्याणां शब्दकरणम् । वृ० द्वि० ३२ अ ।

**दगथालग**-दकस्थालक-कांस्यादिमय जलपात्रम् । ज० प्र० ३८६ ।

**दगपंचवण्णे**-अष्टाशीतौ महाग्रहे चतुस्त्रिंशत्तम । ठाणा० ७६ ।

**दगपहो**-जेण पाणी दगस्स वच्चति सो दगपहो । नि० चू० प्र० २६५ अ ।

**दगपिप्पली**-हरितविशेष । प्रज्ञा० ३३ ।

**दगभवण**-उदकभवन-पानीयगृहम् । दश० १६६ ।

**दगभवनं**-उदकभवन-उदकगृहम् । आचा० ३४० ।

**दगमंडवगा**-दकमण्डपका -स्फटिकमण्डपका । ज० प्र० ४४ । जीवा० २०० ।

**दगमंडवा**-स्फाटिका मण्डपा । राज० ७६ ।

**दगमंडवो**-उदकमण्डप -उदकक्षरणयुक्त । प्रश्न० १६३ ।

**दगमग्गो**-दगवाहो । नि० चू० प्र० २६५ अ ।

**दगमट्टि**-दकमृत्तिका-चिक्खलम् । आव० ५७३ ।

**दगमट्टिआ**-दकमयुक्तमृत्तिका विवेचकद्रव्यप्रयोगपूर्विका मृद्विवेचनकलाप्युपचाराद्दकमृत्तिका । ज० प्र० १३७ । उदकमृत्तिका अचिरात्कायार्द्रीकृता मृत्तिका । आचा० २८५ । उदकप्रधाना मृत्तिका । आचा० ३२२ । चिक्खल्ला । नि० चू० द्वि० ८३ अ ।

**दगमास**-वासा । नि० चू० द्वि० १०६ अ ।

**दगरए**-उदकरज -उदककणा । प्रज्ञा० ३६१ । जीवा० २१० । पानीयकणा । जीवा० १६४ । दकरज-उदकबिन्दुः । वृ० तृ० १९२ आ ।

**दगरक्खसो**-उदकराक्षस -जलमानुषाकृतिर्जलचरविशेष । सूत्र० १६० ।

**दगरय**-दकरज -श्लक्ष्णोदककणिका । आव० ४४३ ।

**दगलेव**-उदकलेपो-नाभिप्रमाणजलावगाहनम् । सम० २६ ।

**दगवण्णो**-दकवर्ण अष्टाशीतौ महाग्रहे चतुस्त्रिंशत्तम । ज० प्र० ५३५ ।

**दगवार**-उदककुम्भ -पानीयघट । दश० १७२ ।

**दगवारओ**-पाणियघडुयओ । दश० चू० ७६ ।

**दगवारग**-दगवारक -जलघट । ज० प्र० १०१ ।

**दगवाहो**-दगमग्गो । नि० चू० प्र० २६५ अ ।

**दगससट्ठहडा**-दगससृष्टाहृता-उदकसम्बद्धानीता हस्तमात्रोदकसस्पृष्टा वा भावना । आव० ५७६ ।

**दगसीम**-वेलन्धरनागराजस्य चतुर्थ आवासपर्वत । ठाणा० २२६ । दकसीम -मन शीलाख्यभुजगेन्द्रस्यावासपर्वत । जीवा० ३११ ।

दगसुगरिया-परिव्राजका । नि० चू० द्वि० १७२ अ ।
दगसोआरा- । नि० चू० प्र० ३५६ आ ।
दगसोकरो-परिव्राजक । आव० ४०० ।
दच्छनरो-मायात्रिकयानपात्रेभ्य सकाशात् दक्षतरो वेगवाहित्वयं । प्रश्न० ५१ ।
दच्छिहसि-द्रक्ष्यसि । आव० ५०६ । भग० ११३ ।
दट्ठा-दृष्ट्वा । व्य० प्र० २८ अ ।
दड्ढ-दाह-कर्मदलिकदारूणा ध्यानाग्निना तद्रूपापनयनमकर्मत्वजननम् । भग० १६ । दग्ध-स्वस्वभावापनयनेन भस्मीकृतम् । आव० ५८२ । दाह-अग्निना दार्वा(र्वा)दिविषयो दाह । भग० १६ ।
दड्ढच्छवी-दग्धच्छवि-शीतादिभिरुपहतत्वक् । प्रश्न० ५२ ।
दड्ढप्पइण्णो-दृढप्रतिज्ञ । भग० ६५३ ।
दड्ढिल्लयं-दाघम् । आव० ८३६ ।
दढ-दृढ-विभीतसिकाररहित परीषहोपसर्गे निष्प्रकम्पो वा । आचा० १२२ । गाढ । उत्त० ३४१ । निष्प्रकम्पम् । नदी० ४६ । षण्मासी यावद् सवयभोगम् । षण्मासान् यावत् म्रियते तद् ईदृश दृढम् । बृ० द्वि० २३८ अ । दृढ-अतिनिबिडचयापन्नम् । जीवा० १२१ ।
दढक्खमाइया-महाश्वपरयादय । व्य० द्वि० १७६ आ ।
दढधणू-आगामिन्यामुत्सर्पिण्या भरतक्षेत्र अष्टम कुलकर । ठाणा० ५१८ । आगामिन्यामुत्सर्पिण्या ऐरावतक्षेत्रे षष्ठ कुलकर । सम० १५३ ।
दढधम्म-दृढो धर्मो यस्य, आपत्स्वपि तत्परिणामाविचलनाद् अक्षोभत्वादित्यर्थः ॥ दृढधर्मेति । ठाणा० २४२ । दृढधर्मा य आपदि धर्मान्न चलतीति । ठाणा० ४८४ । दृढ-स्थिरो निश्चलो धर्मो यस्य स । ओघ० २०२ ।
दढनेमी-दृढनेमि-अन्तकृद्दशाना चतुर्थवर्गस्य दशममध्ययनम् । अन्त० १४ । दृढनेमि-समुद्रविजयस्य चतुर्थ सुत । उत्त० ४९६ ।
दढपइन्न-दृढप्रतिज्ञ । भग० ५४४, ६६५ । अन्त० ४ । विपा० ५१ । दृढप्रतिज्ञ-भ्रयविशेष । विपा० ४४ ।
दढप्पहारी-दृढप्रहारी-कौशाम्ब्या रथिक । उत्त० २१४ । गाढप्रहार । ज्ञाता० २३९ ।
दढभूमि-दृढभूमि । आव० २१६ ।
दढमित्तो-दृढमित्र-योगसग्रहे निरपलापदृष्टान्ते दन्तपुरनगरे धनमित्रवणिजमित्रम् । आव० ६६६ । धणमित्तस्स आलावतस्स वयसो । नि० चू० तृ० १२८ अ । धनदत्तसार्थवाहस्य मित्रम् । व्य० प्र० १०७ अ ।
दढरह-निरयावलया पञ्चमवर्गेऽष्टममध्ययनम् । निरय० ३९ । भरतक्षेत्रे अतीतायामुत्सर्पिण्या अष्टम कुलकर । ठाणा० ५१८ । भरतक्षेत्रे अतीतायामवसर्पिण्या अष्टम कुलकर । सम० १५० । शीतलजिनपिता । आव० १६१ । सम० १५१ । लोकपालाग्रमहिषीणा तृतीया पर्षत् । ठाणा० १२७ । दृढरथा-पिशाचकुमारेन्द्रस्य बाह्या पर्षत् । जीवा० १७१ ।
दढाउ-दाढादाल । जीवा० १२१ ।
दढाउणा-दृढायुरप्रतीत । ठाणा० ४५६ ।
दढाऊ-आगामिन्यामुत्सर्पिण्या चतुर्विंशतिकाया पञ्चमतीर्थकरस्य पूर्वभवनाम । सम० १५४ ।
दण्डः-दुष्प्रयुक्तमनोवाक्कायलक्षणो हिंसामात्र वा एकत्वं चास्य सामान्यतयोद्देशाद् एवं सर्वत्रैकत्वमवसेयम् । सम० ५ ।
दण्डपादिका- । उत्त० ५५ ।
दण्डपालः-नगररक्षक । उत्त० ४६५ ।
दण्डपाशिकः-राजप्रेष्यः । आचा० ३३४ ।
दण्डाः-दुष्प्रणिहितमनोवाक्कायलक्षणा । प्रश्न० ९७ ।
दण्डिकः-राजा । ओघ० १२० ।
दण्डिवक्क- । नदी० १६३ ।
दतिए-चायफुण्णो दतिनो । नि० चू० प्र० ४५ अ ।
दत्त-क्रोडनघात्रीदोषविवरणे भिक्षाचार्यशिष्य । पिण्ड० १२५ । भरतक्षेत्रे आगामिन्यामुत्सर्पिण्या पञ्चम कुलकर । सम० १५३ । ठाणा० ३९८ । दत्त-मगधस्थविराचार्यस्य शिष्य । उत्त० १०८ । दत्त-तगरानगर्यां वास्तव्यो वणिक् । उत्त० ६० । दत्त-भद्राभिधधिग्जातीयपुत्रः धिग्जातिनृपति । आव० ३६६ । दत्त-निरपराधदृष्टान्ते सङ्गमस्थविरशिष्य । आव० ५३६ । सगमथेराणामायरियाण भीसो । नि० चू० द्वि० ६५ आ । कुल्लइरपुरे दुःशिष्य । मर० । निरयावलया तृतीयवर्गे सप्तमाध्ययनम् । निरय० २१, ३६ । दत्त-सप्तमो वासुदेव ।

आव० १५६। मेतार्यपिता। आव० ३५५। दत्त—रोहीटकनगरे गाथापति। विपा० ८२। दत्त—चम्पानगर्यां नृपति। विपा० ९५।

**दत्ताणुन्नायसंवरो**—दत्त च-वितीर्णमशनादिकमनुज्ञात च-प्रतिहारिकपीठफलकादि ग्राह्य, इत्येवरूप संवरो दत्तानुज्ञातसंवर। प्रश्न० १२३।

**दत्ति**—दत्ति सकृद्रुक्तादिपातलक्षणा। प्रश्न० १०६।

**दत्तिआ**—दत्ता च कन्या पित्रादिना परिणीयत इति। आव० १२६।

**दत्तिते**—दत्तय-सकृत्प्रक्षेपादिक्षेपलक्षणा। ठाणा० २६८।

**दत्तिय**—दात्रिका। आचा० ६१।

**दत्तिलायरिअ**—आचार्यविशेष। दश० ७।

**दत्ती**—परिसवयवमध्येकश क्षिपति एषा दत्ति। आव० ८४४। दत्ति-एकक्षेपभिक्षालक्षणा। औप० ३६।

**दत्तीओ**—दत्तय-एकप्रक्षेपप्रदानरूपा। ठाणा० १३६। दत्ति-सकृत्प्रक्षेपलक्षणा। ठाणा० १२०।

**दत्तेसणा**—दत्त दान तस्मिन् एषणा-लहृतदोषान्वेषणात्मिका दत्तैषणा। उत्त० ५६।

**दद्दर**—चीवरावनद्ध कुण्डिकादिभाजनमुखम्। ज० प्र० ५६। दद्दर-बहल, दर्दराभिधानाद्विज्ञानभीखण्डो वा चपेटारूप। ज्ञाता० ४०। घन-चपेटाभिघात, सोपानवीथी। सम० १३८। गलदर्दर वचनाटोप इत्यर्थ। प्रश्न० ४६। दद्दर-आच्छादनम्। आव० ६२५। बहल चपेटाकार। राज० ३६। मुखे घनेन चीवरेण बन्धनम्। बृ० प्र० २६६ अ। दद्दर-वाद्यविशेष। जीवा० १०५। बहल चपेटाप्रकारो वा। जीवा० १६०,२२७। औप० ५। प्रज्ञा० ८६। दद्दर-चीवरावनद्ध कुण्डिकादिभाजनमुखम्। जीवा० २१४, २४४। लघुपटह। जीवा० २६६, २६६। पर्वतविशेष। ज्ञाता० २२२। चन्दनोत्पत्तिस्थानभूत पर्वत। ज० प्र० ४१२। दद्दर-निरन्तरसाद्रपत्त्रमयो नि निविशेष। पिण्ड० ११०।

**दद्दरए**—दद्दरक-मुखबन्धन वस्त्रखण्डम्। पिण्ड० १०१।

**दद्दरओवीलको**—दर्दरेणोपपीडयति-आत्मनो वाच करोतीति दद्दरोपपीडक। प्रश्न० ४६।

**दद्दरओवीलग**—दर्दरेण गलदर्दरेण-वचनाटोपेन अपव्रीडयति-गोपायन्तमात्मस्वरूपपर विलज्जीकरोतीति स दर्दरापव्रीडक। प्रश्न० ४६।

**दद्दरग**—दद्दरिको-यस्य चतुर्भिश्चरणैरवस्थान भुवि स गोचार्मावनद्धो वाद्यविशेष। ज० प्र० १०१।

**दद्दरपिहण**—दर्दरपिधान-वस्त्रबन्धनम्। बृ० द्वि० २७ अ।

**दद्दरमलयसुगंधे**—दर्दरमलयसुगन्ध। ज० प्र० ४१०।

**दद्दरयसंठिय**—दर्दरसंस्थित-आवलिका बाह्यस्य षोडश संस्थानम्। जीवा० १०४।

**दद्दरियं**—लिप्तम्। नि० चू० तृ० ५६ आ।

**दद्देति**—बध्नाति। नि० चू० द्वि० २२ अ।

**दद्दु**—दद्रु-क्षुद्रकुष्ठविशेष। भग० ३०८। ज० प्र० १७०।

**दद्दुर**—मणिकारश्रेष्ठिजीव। भक्त०। राहो. पञ्चमनाम। भग० ५७५। देवविशेष। ज्ञाता० १७८। दर्दुर-चर्मावनद्धमुख कलश। प्रश्न० १५६।

**दद्दुरवडिंसए**—सौधर्मकल्पे विमानविशेष। ज्ञाता० १७८।

**दद्धू**—पसिद्ध। नि० चू० प्र० १२७ आ। तब्भवो दोसो। नि० चू० प्र० १८८ आ।

**दद्रू**—सत्वम महाकुष्ठम्। प्रश्न० १६१। महाकुष्ठविशेष। आचा० २३५। त्वग्रोगविशेष। पिण्ड० ६।

**दधिफोल्लइ**— । भग० ८०३।

**दधिघटिका**— । आचा० १३८।

**दधिघणो**—दधिघन-घनीभूत दधि। ज० प्र० ४६। जीवा० २०५।

**दधिमुहउप्पवयस**— । ठाणा० २६०।

**दधिमुहा**—पर्वतविशेष। सम० ७१।

**दधिवासुया**—दधिवासुका-वनस्पतिविशेष। ज० प्र० ४५। जीवा० २००।

**दधिवाहणो**—दधिवाहन-चम्पा नगराधिपति। आव० २२३।

**दधिहण्डिका**—जाम्बुवतीरूपम्। विशे० ६११।

**दधो**—दधि। प्रज्ञा० ३६१।

**दन्तकाष्ठ**— । आचा० ३१३।

**दन्तपुत्तलिका**—दन्तकर्मणि दृष्टान्त। आचा० ४१४।

दन्तवण–दन्तपावन–दन्तमलापकर्षणकाष्ठम् । उत्ता० ४ ।
दन्ता –दशना । आचा० ३८ ।
दप्प–व्यायामवल्गनादिषु व्यापृततया यो निष्कारणेऽनादर नृपस्थापनाया 'स दर्प । व्य० द्वि० ६५ अ । दप्पिका–या कारणमन्तरेण प्रतिसेवा क्रियते सा । व्य० प्र० ४७ आ । दर्प । मनसिधर्मीमानदलनोरथो गर्व । उत्त० ४२८ । अवत्तव्व । नि० चू० प्र० २५ आ । दर्प्प –देहदृप्तता । सौभाग्याद्यभिमान । अब्रह्मणोऽष्टम नाम । प्रश्न० ६६ । दर्प्प –वल्गनादि । भग० ९१६ । ठाणा० ४६४ । दर्प – दृप्तता । भग० ५७२ ।
दप्पण–दर्पण अष्टममङ्गले प्रथमम् । ज० प्र० ४१६ । दर्पणक –आदर्शकदण्ड । ओघ० २० । दर्पण–दर्पणगण्ड । जीवा० १७० । प्रश्न० ८० ।
दप्पणिज्ज–दर्पणीय–बलकर । ओघ० ६५ । उत्साहवृद्धिहेतुत्वाद् दर्पणीयम् । जीवा० २७८ ।
दप्पणिज्जे–दर्पणीयमुत्साहवृद्धिहेतुत्वात् । ज० प्र० ११६ । दर्पणीय–बलकरमुत्साहवृद्धिकरमित्यर्थ इति । ठाणा० ३७५ ।
दप्पायमाणो–दर्पायमाण । उत्त० २११ ।
दप्पिया–दप्परागदोसाणुगया दप्पिया । नि० चू० प्र० ७६ अ ।
दब्भ–समूलम् । निरय० २६ । दर्भ–मूलसहित दर्भ । भग० २६०, ८०२ । कुश । प्रश्न० १२८ । समूल. । विपा० ७२ । दर्भमयी । प्रश्न० १३ । अग्रभूत । ज्ञाना० ११४ ।
दब्भवब्भत्तारि–दर्भवर्मात्ताणि । आचा० ३६६ ।
दब्भकुरा–तृणविशेष । प्रज्ञा० ३३ । भग० ८०२ ।
दब्भगयोइदल– । भग० ८०२ ।
दब्भपुप्फय–दर्भपुष्प –दर्वीकरसर्पविशेष । प्रश्न० ८ ।
दब्भा–दर्भायन–विज्ञानशाखस्य गोत्रम् । ज० प्र० ५०० ।
दब्भेया–विद्याविशेष । अन्या दर्भ–दर्भविषया भवति विद्या यथा दर्भेलस्पृश्यमान आतुर प्रगुणो भवति । व्य० द्वि० १३३ आ ।
दभियायणसगोत्ते– । सूर्य० १५० ।
दमओ–दमक । आव० ४२१ ।
दमगभत्त–दगभारका तेसिं भत्त दमगभत्त । नि० चू० प्र० २७२ अ ।
दमगा–जे पढम विणय गाहेति ते दमगा । नि० चू० प्र० २७७ अ ।
दमगो–दरिद्र । नि० चू० प्र० ३५० अ । दरिद्र । नि० चू० द्वि० १६७ अ ।
दमघोससुयं– । ज्ञाना० २०८ ।
दमण–दमन–शिक्षाग्राहणम् । प्रश्न० २२ ।
दमणको–दमनक पुष्पजातिविशेष । प्रश्न० १६२ ।
दमणग–हरितविशेष । प्रज्ञा० ३३ ।
दमणगपुड–पुष्पजातिविशेष । ज्ञाता० २३२ ।
दमणा– । भग० ८०२ ।
दमदंत–यादवकौरवसाम्यवान् । मर० । दमदन्त–हस्तिशीर्षनगर राजा । ज्ञाता० २०८ । आव० ३६५ ।
दमसेणे–दमसेन –कृष्णवासुदेवधर्माचार्य । आव० १६३ ।
दमिलि–द्राविडी । भग० ४६० । ज्ञाता० ४१ ।
दमीसरे–दमिन –उदान्तदमनशीलास्ते च राजानस्तेषामीश्वर –प्रभु । यद्वा दमिन –उपशमिनस्तेषां महशोरनमसावत ईश्वरो दमीश्वर । उत्त० ४५१ ।
दम्मंतो–दमित । उत्त० ५३ ।
दम्म–दम्य –दमनयोग्य । आचा० ३६१ ।
दम्मा–दम्य –दमनीय (गोरथक) । दश० २१७ ।
दयइ–दयते–पालयति । आचा० २७५ ।
दया–देहिरक्षा, अहिंसाया एकादश नाम । प्रश्न० ९९ ।
दयाधम्म–दयाप्रधानो धर्मो दयाधर्म, दयाविषयनियमेन चरितधर्म । उत्त० २६३ ।
दयामलका–कशकशा । ओघ० १५७ ।
दर–दृतम् । वृ० द्वि० १०५ आ । अर्धम् । वृ० तृ० १२१ आ । अर्द्ध । नि० चू० तृ० ७३ अ । ईषद् । व्य० प्र० ४६ अ । दरत् । विशे० ५४१ । अर्धविरचितम् । पिं० ६१७ ।
दरगय–दरगत–ईषत्प्राप्त । विशे० ३१२ ।
दरदर–गोप्रम् । नि० चू० तृ० १६ अ ।
दरहिहिए–अर्द्धहिण्डिते । ओघ० १०४ ।
दरि–दरा–पर्वतकन्दरा गुहा । भग० १३४ । मृगमा-,

दिकृतभूविवरविशेष । भग० ६८३ । दर्यो–गुहा । जं० प्र० ६६ ।
**दरिअ**–निम्नतरप्रदेश ग्रघोग्रामादि । भग० ४३६ ।
**दरिद्दथेरा**–दरिद्रस्थविरा नाम पापण्डस्था । आव० २०४ ।
**दरिद्दो**–मल्लो । नि० चू० द्वि० ४५ अ ।
**दरिमहेसु**– । आचा० ३२८ ।
**दरिय**–दृप्त –बलोन्मत्त । आव० ७१६ । गर्वित । आचा० ७५ ।
**दरिसण**–दर्शन सामान्यविशेषात्मके वस्तुनि सामान्यग्रह णात्मको बोध । ठाणा० ४४७ । मत । नि० चू० प्र० ११ आ । दर्शन–आगम । सूत्र० ३७ । दर्शन–प्रकटन, शब्दस्योच्चारण–व्यापारण प्रयोग इति । विशे० ११९७ ।
**दरिसणपुलाओ**–दर्शनपुलाक, पुलाकस्य द्वितीयो भेद । उत्त० २५६ ।
**दरिसणावरणिज्ज**–दर्शनावरणीय–दर्शनमोहनीयमभिगृह्य- ते । भग० ४३२ ।
**दरिसणिज्ज**–दर्शनीय–दर्शनयोग्यम् । जीवा० १६१ । दर्शनीय–नयनमनोहारी । जीवा० २४३ ।
**दरिसणिज्जा**–दर्शनयोग्या, या पश्यच्चक्षुर्नो श्रम न गच्छ त । जं० प्र० २१ । या पश्यच्चक्षुर्न श्राम्यति । ज्ञाता० १३ ।
**दरिसाओ**– । नि० चू० प्र० ७ आ ।
**दरिसाव**–दर्शनम् । दश० १०३ । नि० चू० प्र० १५ अ । व्य० प्र० १७ अ ।
**दरिसावेउ**–दर्शयतु । दश० ४१ ।
**दरी**–कुमारादी । नि० चू० द्वि० १२६ अ । भूविवरा दिकृता लघ्वी गुहा । जीवा० २८२ । जं० प्र० १२४ । शृगालादिकृतक्षीणभूमिविशेष । ज्ञाता० ३६ । कन्दर- विशेष । ज्ञाता० ६७ । दरी–सुरङ्गा गुफा च । आव० ६७७ । आचा० ४११ ।
**दर्दरिका**–गोधिका–वाद्यविशेष । अनु० १२६ ।
**दर्दर**–पर्वतविशेष । भग० ४७७ ।
**दर्दरक:**– । राज० ५० ।
**दर्दरिका**–वाद्यविशेष । ठाणा० ३९५ ।
**दर्पण**–कार्याभावे । बृ० प्र० २२२ अ ।
**दर्भ**–तृणविशेष । आचा० २८५ ।
**दर्वी**–वर्द्धकि । नंदी० १६१ ।
**दर्वीकर**–सर्पविशेष । सम० १३५ । प्रश्न० १० ।
**दर्शन**–आयभेद । सम० १३५ । दृष्टि –चक्षुर्ज्ञानं नय मत वा । ठाणा० १८३ ।
**दर्शनत**–दर्शनाय प्रयुञ्जानो दर्शनत । ठाणा० ३३७ ।
**दर्शनलालस**–अवलोकचपलम् । आव० ७८४ ।
**दर्शनविशुद्धि**– । आचा० ४१६ ।
**दर्शनानि**–नया । ठाणा० ११६ ।
**दर्शनोपसम्पत्**–दर्शनप्रभावनीयशास्त्ररविज्ञानार्थमेव दर्शनो- पसम्पदिति । आव० २७० । दर्शनप्रभावकसम्मत्यादि शास्त्रविषया । ठाणा० ५०१ ।
**दल**–चूर्णम् । जं० प्र० ४२२ ।
**दलति**–प्रयच्छति । बृ० द्वि० २८१ अ ।
**दलए**–दलिक–कारणम् । भग० ६६५ ।
**दलएज्ज**–दद्यात् । आचा० २८० ।
**दलनिकर**–दलवृन्दम् । ज्ञाता० १६८ ।
**दलयमाणे**–ददत् न कृतप्रत्युपकारो भवेदिति । ठाणा० ११६ ।
**दलामि**–दलयामि तुभ्य ददामि । ज्ञाता० ३६ ।
**दलाह**–दत्तम् । उत्त० ३६१ । दल–प्रयच्छत । ज्ञाता० ११६ ।
**दलिअ**–द्रव्य वस्तु वा । ओघ० ३७ ।
**दलिय**–दलिक–परममेधावी आचार्यपदयोग्य । बृ० तृ० २३८ आ ।
**दव**–द्रव –जलम् । पिण्ड० १२ । द्रव –परिहास । ओघ० २१ । जीवा० १७२ । प्रज्ञा० ८६ । द्रव –विकृतिवि- शेष । आव० ८५४ । द्रव –कर्मग्रन्थिद्रावणाद् द्रव– सयम । सूत्र० ३१६ । दव–दूतापत्राचक । बृ० प्र० १२४ अ । द्रव–पानकम् । ओघ० १०१ । पानीय । पिण्ड० १७५ । सौवीरद्रवादिक अलपकृत, दुग्धतैलघ- शादवधृतादि च । बृ० तृ० २०६ आ । द्रव –सयम । आचा० ७७, १६१ । द्रव–तन्दुलधावनादि । पिण्ड ८३ ।

दवउदग-द्रवोदकम् । नि० चू० प्र० ४५ अ ।

दवए-द्रवति 'दुद्रुगतौ' इति धातु, ततश्च द्रवति तांस्तान् स्वपर्यायान् प्राप्नोति-मुञ्चति वा । विशे० २४ ।

दवकारगा-द्रवकारका-वैलिकरा । ज० प्र० २६४ ।

दवकारिओ-परिहासकारिणी । भग० ५४८ ।

दवगुडो-द्रवगुड-गुडभेद, द्रवीभूतो गुडविशेष । आव० ८५४ ।

दवग्गिदावणया-दवाग्निदापनता-त्रयोदश कर्मादानम् । आव० ८२६ ।

दवदव-द्रुत द्रुत तथाविधालम्बन विना त्वरितम् । उत्त० ४३४ । द्रुत द्रुत । बृ० प्र० २८८ आ । अन्त० २० ।

दवदवचार-द्रुतद्रुतचार विकल्पसमाधौ प्रथम स्थानम् । आव० ६५३ ।

दवदवचारि-द्रुतद्रुतं चरति-गच्छति, सोऽनुकरणशब्दतो दवदवचारि, असमाधौ प्रथम स्थानम् । सम० ३७ ।

दवदवस्सं-अभ्रुय । द्रुय । दश० चू० ७६ ।

दवदवस्य-द्रुतद्रुत त्वरितम् । दश० १६६ ।

दवरयः-सूत्रम् । जीवा० २३७ ।

दवरिका-जीवा-प्रत्यञ्चा । सूर्य० २३३ ।

दवविरोह-द्रवेण काञ्जिकेन सह विरोध । द्रवविरोध द्रव-उदक तन निर्लेपन करोति सागारिकपुरत इति । विनाश । ओघ० ४८ ।

दवसील-द्रवशील-भासइ दव दुय गच्छए य दरित्तव्व गो-विमामरए मव्व दुयदुयकारी फुडइ व ठिओवि दप्पेण । बृ० प्र० २१३ अ । द्रवशील-दर्पाद् द्रुतगमनभाषणादि । ठाणा० २७५ ।

दविए-रागादिभावरहितत्वाद् द्रव्य, द्रवति-गच्छति तांस्तान् ज्ञानादिप्रकारानिति द्रव्य । भाषोत्कर्षमानम् । दश० ८४ । द्रव्यकाय-भ्यादिघटादिद्रव्यसमुदाय । दश० १३४ । द्रव्यकाय-रागद्वेषरहित भिक्षुपर्याय । दश० २६२ । द्रव्य-द्रव्यानुयोग । दश० ४ ।

दविए जीविय-द्रव्यमेव सचेतनादिभेद जीवितव्यहेतुत्वाज्जीवित द्रव्यजीवितम् । ठाणा० ७ । रागदोषवि-मुक्तो । दश० चू० १४५ ।

दविओ- । दश० चू० ३३ ।

दवियसि- । सूत्र० ३०७ ।

दविय-वीय, णूम । नि० चू० द्वि० ७० आ । द्रविक-समुदाय । भग० ९२ । त्रिविनष्टि-रागद्वेषविरहाद् द्रव्यभूत कर्मग्रन्थिद्रावणाद्वा द्रव-संयम स विद्यते यस्यासौ द्रविक । आचा० ३०६ । द्रव्य-संयम स विद्यते यस्यासौ द्रविक । आचा० २९२ । द्रव्य-भव्य-मुक्तिगमनयोग्य । आचा० २४६ ।

दवियणुजोगे-द्रवतीति द्रव्य तस्यानुयोग द्रव्यानुयोग-सदसत्पर्यालोचनारूप । ओघ० ८ ।

दविया-द्रविका नाम रागद्वेषनिर्मुक्ता, द्रव-संयम सप्त-दशविधान कर्मकाठिन्यद्रवणकारित्वाद्-विलयहेतुत्वाद् स येषां विद्यते त द्रविका । आचा० ७७ ।

दवियाणि-अटव्या घासार्थं रागकुलाश्रदभूमय । आचा० ३८२ ।

दवियाणुओगे-अनुयोजन-सूत्रस्यार्थेन सम्बन्धन अनुरूपोऽनुकूलो वा योग-सूत्रस्याभिधेयार्थं प्रति व्यापारोऽनुयोग, व्याख्यानमिति भाव द्रव्यस्य-जीवादेरनुयोगो-विचारो द्रव्यानुयोग:, यज्जीवादेर्द्रव्यस्य विचार्यते स द्रव्यानुयोग, द्रवति-गच्छति तांस्तान् पर्यायान् द्रूयते वा तैस्तै पर्यायैरिति द्रव्य-गुणपर्यायवानर्थं, तत्र सन्ति जीवे ज्ञानादय सहभाविस्वलक्षणा गुणा न हि तद्वियुक्तो जीव कदाचनापि सम्भवति, जीवत्वहान, तथा पर्याया अपि मानुषत्वबाल्यादय कालकृतावस्थाभेदाश्च सन्त्येवेति, अतो भवत्यसौ गुणपर्यायवत्त्वात् द्रव्यमित्यादि द्रव्यानुयोग । ठाणा० ४८१ ।

दविल-द्रविड-विलातदशनिवासीम्लेच्छविशेष । प्रश्न० १४ ।

दव्वनो-द्रव्यायमान । उत्त० २७६ ।

दव्व-द्रव्य-वस्तु । आव० ७६८ । द्रव्य-श्रोत्रादि । आव० ८४४ । द्रव्य-त्रिकालानुगतिलक्षण पुद्गलादि-वस्तु । प्रश्न० ११० । द्रव्य-विषयम् । प्रश्न० ५१ । द्रव्यं सामान्यम् । ओघ० ६८ । इह द्रव्यवस्तुत्वाय वदता समुच्छिन्नसर्वप्रभेदनिर्भेदबीज मयूराण्डकरसवदनभिव्यक्तदे-

शकालक्रम प्रत्ययबद्धविशेषभेदपरिणतेर्योग्य द्रव्यम्। प्रज्ञा० १८४। वर्तनादिलक्षणो द्रव्यकाल । आव० २५७। द्रव्यजीवित-सचित्तादि । आव० ४७९। द्रव्य-भव्यो मुक्तिगमनयोग्य, रागद्वेषविरहाद्वा द्रव्यभूतोऽकषायो। सूत्र० १७०। सर्वत्रान्वयि सामान्यमुच्यते द्रवति-गच्छति तान् तान् पर्यायान् विशेषानिति वा द्रव्यम्। ज० प्र० २६। द्रु सत्ता तस्या एवाऽवयवो-विकारो वेति द्रव्यम्। विशे० २५। द्रव्य-पूर्वोपात्त कर्म। दश० ६८। द्रव्य-जीवाजीवभेद। अनु० १०५। यत् सामान्य तद् द्रव्यम्। विशे० ८६६। यत्रस्थास्त उत्पद्यन्त उत्पद्य चावतिष्ठन्ते प्रलीयन्ते च तद् द्रव्यम्। उत्त० ५५७। द्रव्य-हिरण्यम्। नि० चू० प्र० ३५६ अ। द्रवति-गच्छति तांस्तान्पर्यायानिति द्रव्य-अतीत-भविष्यद्भावकारण अनुभूतविवक्षितभावमनुभविष्यद्विव क्षितभाव वा वस्त्वित्यर्थ। अनु० १४।

दव्वकाल-वर्तनादिरूपो द्रव्यकाल। विशे० ८३७। स्वपार्द्ध सार्द्धम्। ठाणा० ३६८। द्रव्यकाल-वर्तनादिलक्षण। दश० ६।

दव्वगुणो-द्रव्यगुण-द्रव्यम्। आचा० ८५।

दव्वचरण-गतिचरण भक्षणाचरण आचरणाचरण च। नि० चू० प्र० १ अ।

दव्वट्ट-शकटादिचक्राणामुद्धिमूले वा यो लोहमय पट्टो दीयते स द्रव्यार्त्त। आचा० ३५।

दव्वट्ठया-द्रव्यमवार्थस्तस्य भाव द्रव्यत्व वा द्रव्यार्थता। अनु०६७। द्रव्य च तदर्थश्चेति द्रव्यार्थस्तस्य भावो द्रव्यार्थता-प्रदेशगुणपर्यायाधारता अवयविद्रव्यतेति यावत्। ठाणा० १०। द्रव्यार्थता द्रव्यास्तिकनयमतम्। जीवा०१८३। द्रव्य मेवार्थ तात्त्विक पदार्थ प्रतिशायां यस्य न तु पर्याया स द्रव्यार्थ-द्रव्यमात्रास्तित्वप्रतिपादको नयविशेष तद्भावो द्रव्यार्थता, द्रव्यमात्रास्तित्वप्रतिपादकनयाभिप्राय इति यावत्। ज० प्र० २६।

दव्वट्ठाणाउय-द्रव्य-पुद्गलद्रव्य तस्य स्थान-भेद परमाणुद्विप्रदेशिकादि तस्यायु-स्थिति, अथवा द्रव्यस्याणुत्वादिभावेन यत्स्थान तद्रूपमायु द्रव्यस्थानायु। भग० २३६।

दव्वट्ठो-द्रवति गच्छति तान् तान् पर्यायान् विशेषानिति वा द्रव्यमिति व्युत्पत्तेर्द्रव्यमेवार्थ तात्त्विक पदार्थो यस्य न तु पर्याय स द्रव्यार्थ-द्रव्यमात्रास्तित्वप्रतिपादको नयविशेष। जीवा० ९८।

दव्वणमण-द्रव्यगोपनम्। उत्त० २२१।

दव्वतितिण-द्रव्यतितिणिक। बृ० प्र० १२६ आ। ज अणीए दढ तिडितिडेति त दव्वतितिण। नि० चू० तृ० ८० अ।

दव्वतित्थ-द्रव्यतीर्थ-मागधवरदामादि। आव० ४६८।

दव्वत्थओ-द्रव्यस्तव-पुष्पगन्धधूपादि। आव० ४९२।

दव्वदेवो-यो हि पृथ्व्यादिमृत्वा देवत्व प्राप्स्यति बद्धायुष्क अभिमुखनामगोत्रो वा स योग्यत्वाद् द्रव्यदेव। आव० ७६८।

दव्वधम्म-द्रव्यधर्म। दश० २१। द्रव्यधर्म-धर्मास्तिकाय तिक्तादिर्वा द्रव्यस्वभाव गम्यादिर्वा धर्म कुतीर्थिको वा धर्म। आव० ४६७।

दव्वपडिबद्धा-द्रव्यप्रतिबद्धा। नि० चू० प्र० १०६ आ।

दव्वपरंपरा-द्रव्यपरम्परा। दश० ४६।

दव्वपाणा-द्रव्यप्राणा-आयु प्रभृतय। जीवा० १४०।

दव्वब्भूय-द्रव्यभूत भावरहित। विशे० १३११।

दव्वभावभासा-तत्र द्रव्य प्रतीत्योपयुक्तोर्या भाष्यते सा द्रव्यभावभाषा। भावभाषाभेद। दश० २०८।

दव्वभावसंकोयणपयत्थो-द्रव्यसङ्कोचन करशिर पादादिसङ्कोच, भावसङ्कोचन विशुद्धस्य मनसो नियोग, द्रव्यभावसङ्कोचनप्रधान पदार्थ द्रव्यभावसङ्कोचनपदार्थ। आव० ३७६।

दव्वभिक्खु-क्रियाविशिष्टविदारणादिदारकसमन्वितो, द्रव्य भिनत्तीति कृत्वा। द्रव्यभिक्षु-अपारमार्थिक। दश० २६०।

दव्वभूतो-अणुवओगो, भावसून्येत्यर्थ। नि० चू० प्र० ६४ अ।

दव्वमद-द्रव्यमन्द-अतिस्थूलोऽतिकृशो वा। आचा०७०।

दव्वमूढो-बाहिरितो धूमेणाकुलितो मुज्झति, अतो धत्तूर मेव मदणकोद्दवोदणेण वा भुत्तण मुज्झति। जो वा

पुव्वदिट्ठ दव्व कालतरेण दिट्ठम्मि ण याणति सो दव्व मूढो। नि० चू० द्वि० ४१ आ।

दव्वरूव–यत् मन पर्याप्तिनामकर्मोदयतो मन प्रायोग्य-वर्गणादलिकमादाय मनस्त्वेन परिणमन तत् द्रव्यरूप मन। प्रज्ञा० ३११।

दव्वलेस–द्रव्यलश्यावर्ण। भग० ५७४।

दव्ववग्गण–समानजातीयद्रव्याणा राशिर्द्रव्यवर्गणा। भग० २४।

दव्वविसेसो–द्रव्यविशेष–द्रव्यपरिणाम। भग० २३७।

दव्वविहुगम–धारयत्येव तद्द्रव्य यस्त द्रव्यविहङ्गम इति, द्रव्य च तद् विहङ्गमश्चेति द्रव्यविहङ्गम। दश० ६६।

दव्वसकोयण–द्रव्यसङ्कोचन करशिर पादादिसकोच। ज० प्र० १०। आव० ३७६।

दव्वसम्म–यथा सम्यक्लक्षणनिष्पत्ते कर्तुं तन्निमित्तचित्तस्वास्थ्योत्पत्ते यदर्थं वा कृत तस्य शोभनानुकरणतया समाधानहेतुत्वाद्वा द्रव्यसम्यग्। आचा० १७५।

दव्वसाम–द्रव्यसाम। उत्त० ५३३।

दव्वसारो–द्रव्यसार–द्रव्यलक्षणसार, परिग्रहस्य दशम नाम। प्रश्न० ९२।

दव्वसोले–तच्छील–यो हि फलनिरपेक्षस्तत्स्वभावादेव क्रियासु प्रवर्त्तते ॥ तच्छील–द्रव्यशील, प्रावरणाभरण-भाजनादिषु। सूत्र० १५३।

दव्वसुद्ध–द्रव्यशुद्ध दव्वत सुद्धन प्रासुकादिनेति। विपा० ९२। द्रव्य–ओदनादिक शुद्ध उद्गमादिदोषरहित यत्र दाने तत्। भग० ६६१।

दव्वहलिया–तृणविशेष। प्रज्ञा० ३३।

दव्वापाय–अपायस्य प्रथम प्रकार। द्रव्यादपायो द्रव्या-पाय, अपाय–अनिष्टप्राप्ति द्रव्यमेव वा अपायो द्रव्य-पाय अपायहेतुत्वादित्यर्थ। दश० ३५।

दव्वाभिओगो–द्रव्याभियोग–द्रव्यसयोगजचूर्ण। ओघ० १६३।

दव्वाभिग्गहचरए–भिक्षाचर्यायाद्रव्याभिग्रहविषयाद् द्रव्याभिग्रहचारो भिक्षाचर्या। भग० ६२१।

दव्वायर्षे–द्रव्यातङ्क–शरीरपीडा। आचा० ७५।

दव्वायार–आचरण आचार, द्रव्यस्याचारो द्रव्याचार, द्रव्यस्य सदाचरण तेन तेन प्रकारेण परिणमनमित्यर्थ। दश० १०१।

दव्वासण्णं–द्रव्यासन्न–ज ववलधरआरामाईण आसण्णे वोसिरइ। ओघ० १२३।

दव्विंदियाइ–द्रव्येन्द्रियाणि – निर्वृत्त्युपकरणलक्षणानि। भग० ८७।

दव्विसोत्थिक– । भग० ८०२।

दव्वी–दर्वी–फणा। जीवा० ३९। प्रज्ञा० ४७। दर्वी–लघीयान्–दारुहस्त। पिण्ड० ८४। दर्वी–गोवसदृशा। दश० १७०। हस्तिविशेष। प्रज्ञा० ३३। दर्वी। आचा० ३४२।

दव्वीकरा–दर्वीकरा–फणभृत। प्रश्न० ३७। दर्वीव दर्वी–फणा तत् कारणशीला दर्वीकरा, अहिभेदविशेष। प्रज्ञा० ४६।

दव्वुवहाण–उप–सामीप्येन धीयते–व्यवस्थाप्यत इत्युप-धान द्रव्यभूतमुपधान द्रव्योपधानम्। आचा० २६७।

दव्वोवरम–द्रव्योपरम–द्रव्यान्यथात्वम्। भग० २३६।

दव्वोवाय–द्रव्योपाय, उपायभेद। दश० ४०।

दव्वोसह–द्रव्यौषध पिप्पल्यादि। दश० १६३।

दसकन्धर.–रावण। प्रश्न० ८७।

दसदसकिकाया–शतम्। व्य० द्वि० ३४७ आ।

दसधासामाचारी–इच्छामिच्छेत्यादिका। ओघ० १।

दसरय–अयोध्याधिपति, रामपिता। प्रश्न० ८७।

दसविध–चक्रवालसमाचारी, सामाचारीविशेष। व्य०प्र० १६ आ।

दसा–दशाध्ययनप्रतिबद्धा ग्रन्थपद्धत्य। प्रश्न० १।

दसाराहय–कृष्णागतभोप्रार्थनाप्रणयमन्त्रकारिण। दश० २४७।

दसार्णकूटवत्तिनि– । आचा० ४१८।

दसार्णभद्द–दशार्णपुरे राजा। ठाणा० ५१०।

दसग–दशानामङ्गानां समाहारो दशाङ्गा। उत्त० १८७।

दसाङ्गानि–भोगोपकरणानि वक्ष्यमाणान्यस्मिन् दशाङ्ग। उत्त० १८७।

दस–दशा–भाग। उत्त० १४४।

**दसउरं**-दशपुरं, प्रद्योतनमोचने नगरम् । उत्त० ६६ । दशपुर सप्तमनिह्नवोत्पत्तिस्थानम् । विशे० ९३४ ।

**दसउरनगर**-दशपुरनगर-आर्यरक्षितदीक्षानगरम् । विशे० १००२ ।

**दसकालिअं**-दशवैकालिकम् । आव० ६१ ।

**दसगुण**-दशगुण -एकगुणकालापेक्षया दशाभ्यस्त । ठाणा० ५२७ ।

**दसण्णकूड**-दशार्णकूट-गजाग्रपदोत्पत्तौ यत्र महावीरस्य समवसरण जातम् । आव० ६६९ । दशार्णकूट-पर्वत विशेषः । आव० ३५१ ।

**दसण्णपुरं**-दशार्णपुर दशार्णभद्रराजधानी । आव०३५९ । दशार्णपुर यत् परावर्त्य एडकाक्षनाम नगर जातम् । आव० ६६९ ।

**दसण्णभद्दो**-दशार्णभद्र दशार्णपुरनगरे राजा । आव० ३५९ । दशार्णभद्र -गजाग्रपदोत्पत्तिविषये दशार्णपुरनगराधिपति । आव० ६६९ ।

**दसण्ण**-दशार्ण , देशविशेष । उत्त० ४४८ ।

**दसण्णा**-दशार्णाः जनपदविशेष. । प्रज्ञा० ५५ ।

**दसतोण**-ओषधिविशेष. । प्रज्ञा० ३३ ।

**दसदसमिया**-दशदशमिका-भिक्षुप्रतिमाविशेष. । अन्त० २६ । दश दशमानि दिनानि यस्या सा दशदशमिका । सम० १०० ।

**दसद्धवण्णं**-दशार्द्धवर्णं-पञ्चवर्णम् । जं० प्र० ९८ । दशार्द्धवर्णं-कुसुमविशेष । आव० २३१ ।

**दसधणू**-निरयावल्या पञ्चमवर्गे एकादशममध्ययनम् । निरय० ३९ । ठाणा० ५१८ । ऐरवतक्षेत्रे आगामिन्या मुत्सर्पिण्या षष्ठ कुलकर । सम० १५३ ।

**दसपलयं**-दशपलमानम् । आव० १६४ ।

**दसपुर**-दशपुरम् । दश० द्वि० ३१६ आ । णगरविसेसो। नि० चू० द्वि० १०९ अ । दशपुर-आर्यरक्षितविहारस्थानम् । उत्त० १७३ । दशपुर-पुरविशेष. । आव० २९२ । सोमदेवब्राह्मणवासनगर नगरम् । आव० २९६ । दशपुर-अबद्धिकनिह्नवोत्पत्तिस्थानम् । आव० ३१२ ।

**दसपुरोद्देसे**- । नि० चू० प्र० ३४९ आ ।

**दसमुद्दिताणंतकं**-दशमुद्रिकानन्तक - हस्ताङ्गुलिसम्बन्धिमुद्रिकादशकम् । जीवा० २५३ ।

**दसमुद्दियाणंतयं**-दशमुद्रिकानन्तक - हस्ताङ्गुलिमुद्रिकादशकम् । प्रश्न० ४७७ ।

**दसरह**-निरयावल्या पञ्चमवर्गे सप्तममध्ययनम् । निरय० ३९ । भरतक्षेत्रेऽतीतायामवसर्पिण्या नवमः कुलकरः । सम० १५० । दशरथ -नारायणवासुदेवपिता । सम० १५२ । आव० १६३ । भरतक्षेत्रेऽतीतायामुत्सर्पिण्या नवम कुलकर । ठाणा० ५१८ ।

**दसहा**-दशधा, समाचारीभेदा । विशे० ८४१ । दशविधा-इच्छाकारादिलक्षणा सामाचारी । आव० २५८ ।

**दसहासामायारी** -इच्छाकारमिथ्यादुष्कृतादिदशविधसाधुसमाचाररूपा दशधा सामाचारी । विशे० ८४२ ।

**दसा**-दशा । आव० ६१ । अनुभागेन पुनो विभागो दशा । नि० चू० द्वि० २८ आ । दशा-वर्तिः । जं० प्र० १०२ । दशा-अवस्थाऽपरिगतिसिद्धिगमनलक्षणा । नंदी० २०८ ।

**दसाउ**-वर्षदशकप्रमाण. कालकृता अवस्था. । ठाणा० ५१९ । दशाधिकाराभिधायकत्वादशा इति । ठाणा० ५०६ ।

**दसार**-दशार्हा.-समुद्रविजयादयो दशवसुदेवान्ताः। सम० १३२ । दशारा -वासुदेवाः । सम० १५६ । दशार -त्रिपृष्ठवत. । आव० १६७ । दशार्हाः-बलदेववासुदेवाः। वासुदेवा । जं० प्र० १६६ । वासुदेवः । ज्ञाता० २२० ।

**दसारकुलनंदणो**-दशारकुलनन्दन । औप० १७६ ।

**दसारचक्क**-दशार्हचक्र-यदुसमूह । उत्त० ४९० ।

**दसारवग्ग**-दशारवर्ग -दशारसमुदाय हरिवंशराजान । दश० ३६ ।

**दसारसीह**-दशारसिंह -अरिष्टनेमिपितृव्यपुत्रः । प्रधानदर्शनवतोऽपि चारित्रेण विनाऽवरगतिप्राप्ति । आव० ५३२ । दशार्हसिंह -कृष्णः। उत्त० ६६ ।

**दसारा**-दसारा -समयभाषया वासुदेवा । ठाणा० ७६ । दशारा -हरिवंशकुलोद्भवा । सूत्र० २६९ । दशार्हा -समुद्रविजयादिका. । अन्त० २ । ज्ञाता० १००,२२० ।

दशार्हा –उत्त० ४६२ ।

दसुगाययणाणि–दस्यूनां–चौराणामायतनानि–स्थानानि । आचा० ३७३ ।

दसुय–दस्यु –देशप्रत्यन्तवासी चौर । उत्त० ३६६ ।

दसेज्ज–दशेत् । आव० ४०५ ।

दस्यु –अदत्तहार । आचा० १२३ ।

दह–ह्रद –नद्यादीनां निम्नतर प्रदेश । उपा० १० । ह्रद –पद्मह्रदादि । प्रज्ञा० ७२ । ह्रदा । प्रज्ञा० २६७ । भग० ६२, २३७ । सूत्र० ३०७ । ज्ञाता० ३६ ।

दहगालण–ह्रदगालनं–ह्रदस्य मध्ये मत्स्यादिग्रहार्थं भ्रमण, जलनि:सारण वा । विपा० ८० ।

दहण–शरीरावयवस्य वाताद्यपनयनार्थं दहनम् । आचा० ५० ।

दहन–केवलिसमुद्घातध्यानाग्निना वेदनीयस्य भस्मसात्करण, शेषस्य च दग्धरज्जुतुल्यत्वापादनम् । आचा० २६८ ।

दहपती–ह्रदपति –नदप्रधानो महाह्रद । प्रश्न० ९६ ।

दहपवहण–ह्रदप्रवहण–ह्रदजलस्य प्रकृष्ट वहनम् । विपा० ८० ।

दहमलण–ह्रदमलन ह्रदस्य मध्ये पौन:पुन्येन परिभ्रमण, जले वा निःसारिते पङ्कमर्दन थोहरादिप्रक्षेपेण ह्रदजलस्य विक्रियाकरणम् । विपा० ८० ।

दहमह–ह्रदमह –ह्रदस्य उत्सव । जीवा० २८१ । आचा० ३२८ ।

दहमहण–ह्रदमथन–ह्रदजलस्य तरुशाखादिभिर्विलोडनम् । विपा० ८० ।

दहवतीओ– । ठाणा० ८० ।

दहवहण–ह्रदवहन–स्वत एव ह्रदाज्जलनिर्गम. । विपा० ८० ।

दहाति–दहा –ह्रद । ठाणा० ८९ ।

दहावई–द्रहावती, कुण्डनाम । ज० प्र० ३४६ ।

दहावती–द्रहा–प्रथमप्रमाणस्य मन्दरस्यामिति द्रहावती महानदीनाम । ज० प्र० ३४६ ।

दहिहुर–दधिहुरम् । आव० ४१४ ।

दहिघणे–दधिघन –दधिपिण्ड । प्रज्ञा० ३६१ ।

दहिफोल्लइ–वल्लीविशेष । प्रज्ञा० ३२ ।

दहिमुहे–दधिमुखा –प्रत्येकमञ्जनकानां दिक्चतुष्टयव्यवस्थितपुष्करिणीमध्यवर्तिन षोडशेति । ठाणा० ४८० । दधिमुग्र –वरुणस्य पुत्रस्थानीयो देव । भग० १९९ । दधिमुखा –दधिवदुज्वलवर्णं मुख–शिखर रजतमयत्वाद् येषां ते । ज० प्र० १६३ । पर्वतविशेष । ज्ञाता० १५५ । दधिमुखा –अञ्जनकचतुष्टयपार्श्ववर्त्तिपुष्करिणीषोडशमध्यभागवर्तिन पर्वता । प्रश्न० ९६ ।

दहिय–दधि । आव० १९८ ।

दहिवण्णे–धर्मनाथजिनस्य चैत्यवृक्ष । सम० १५२ ।

दहिवन्न–द्वीपकुमारस्य चैत्यवृक्ष । ठाणा० ४८७ । भग० ८०३ । दधिपर्णं–वृक्षविशेष । प्रज्ञा० ३२ ।

दहिवासुया–दधिवासुका–वनस्पतिविशेष । राज० ८० ।

दहिवाहणो–दधिवाहन –चम्पानगर्यां नृपति । उत्त० ३०० । दधिवाहन –द्रव्यव्युत्सर्गे चम्पानरेश करकण्डुपिता च । आव० ७१६ ।

दाइंति–दर्शयन्ति । सू० प्र० १०४ आ ।

दाइंतुच्चाराई–उच्चारप्रश्रवणस्थानानि । ओघ० ७७ ।

दाइ–विकल्पार्थो निपात । सू० द्वि० २४१ आ । अभिप्रायदर्शनम् । नि० चू० प्र० १३८ ब ।

दाइआ–दर्शिता । आव० १११ । दायिका–गोत्रिका । ज० प्र० १४२ ।

दाइओ–दर्शित । आव० १९८ ।

दाइगो–दायाद । आव० ४८७ ।

दाइतो–दर्शित । उत्त० ३०१ ।

दाइय–दर्शितम् । आव० ६४, ७०० । दायदा–पुत्रादय । ज्ञाता० २१ ।

दाइयविप्परद्धो–दायादघाटित । आव० २२० ।

दाउं–स्वहस्तेन दातुम् । व्य० प्र० २२० आ ।

दाए–दानम् । ज्ञाता० ३६ ।

दाएइ–दर्शयति । आव० १६७ ।

दाएज्जसु–दर्शये । उत्त० २११ ।

दाएति–दर्शयति । आव० १४८ ।

दाएह–दर्शयत । उत्त० १०० ।

दाकलसं-कलशस्तु लघुतरः । भग० ६८४ ।
दाकुंभग-इह कुम्भो महान् । भग० ६८४ ।
दाक्षपानक-पानकभेद । आचा० ३४६ ।
दाडिम-फलविशेष । प्रज्ञा० ३६५ । भग० ८०३ ।
दाढा-दंष्ट्रा-आमी । आव० ५६६ । दंष्ट्रा -आस्य । आव० ५६६ । सक्थि । जं० प्र० १६२ ।
दाढि-दंष्ट्रा-दशनविशेष । प्रश्न० ८ ।
दाढिआलि-दाढिकालि-सदशवस्त्रपरिधानरूपा दृश्यमाना धौतपोत वा । बृ० द्वि० २२० अ ।
दाढिगाली-दंष्ट्रागाली, दुष्प्रतिलखितदूष्यपञ्चके पञ्चमो भेद । आव० ६५२ । ठाणा० २३४ ।
दाढियाए-उत्तरौष्ठस्य । भग० ६८४ ।
दाढीयाली-धोयपुत्ती । नि० चू० द्वि० ६१ अ ।
दाढुड्डिअ-उद्घृतदंष्ट्र-उत्खातदंष्ट्रम् । दशा० २७६ ।
दाणंतराइए-यदुदयवशात् सति विभवे समागते च गुणवति पात्रे दत्तमस्मै महाफलमिति जानन्नपि दातुं नोत्सहते तद्दानान्तरायम् । प्रज्ञा० ४७५ ।
दाण-दान-अशनादिप्रदानम् । आव० ६०४ । दान-लब्धस्यान्नादेर्ग्लानादिभ्यो वितरणम् । प्रश्न० १२६ । दान-स्वपरानुग्रहार्थमर्थिने दीयत इति दानम् । सूत्र० १५० दान-दान श्राद्धक । ओघ० ४७ ।
दाणकम्मे-दानकर्म-अङ्कनार्थं गिरिकरक्तसूत्रेण रेखादानम् । जं० प्र० २०६ ।
दाणट्ठा-दानार्थं-साधुवादनिमित्त यो ददाति । दश० १७३ ।
दाणमाणसगहिया-दानमानसगृहीता । आव० ६७७ ।
दाणमाणसगहीता-दानमानसगृहीता । आव० ३४६ ।
दाणरुई-दानरुची । आव० ११० ।
दाणव-दानवा -भुवनपतय । उत्त० ४३० ।
दाणवय-दानव्रत-वितरणनियम । प्रश्न० ३२ ।
दाणविप्पणासो-दानविप्रणाश - दत्तापलाप । प्रश्न० १२५ ।
दाणसड्ढ-दाणरूची । नि० चू० प्र० १६६ आ, २८२ अ ।
दाणा-दाणसड्ढा । नि० चू० प्र० ८६ आ ।
दाणामा-दानमयी । भग० १७४ ।
दाणिं-इदानीं-सम्प्रति । भग० १७६ । इदानीम् । मर० । इदानीम् । उत्त० ३८७ ।
दाणिसि-देशीयभाषयेदानीम् । उत्त० ३८७ ।
दाण्डपाशिक- । नंदी० १६३ ।
दातारो- । नि० चू० द्वि० १७० अ ।
दाथालगं-उदकार्द्रं-स्थालकम् । भग० ६८० ।
दायालय-उदकार्द्रं स्थालकम् । भग० ६८४ ।
दानं-शुद्धि । भग० ७६६ । शिष्येभ्यो निसर्ग । आव० ६८ । अनुग्रहार्थं स्वस्यातिसर्ग । तत्त्वा० ७-३३ ।
दानव-भवनपतिदेवविशेष । ठाणा० ३५६ ।
दानश्राद्ध-श्रावकविशेष । उत्त० ६६७ । आव० ८४६ ।
दाम-पुष्पदाम रत्नविचित्रम् चतुर्दशस्वप्ने पञ्चम स्वप्न । आव० १७८ । ज्ञाता० २० ।
दामओ-रज्जु । आव० १८८ ।
दामकं-दामक-रज्जुमयपादसंयमनम् । प्रश्न० ५६ ।
दामगंठी-दामग्रन्थि -रज्जुग्रन्थि । आव० ८२० ।
दामड्ढी-कुञ्जरानीकाधिपतिविशेष । ठाणा० ३०३ ।
दामणि-दामनी-पशुबन्धनम् । सूर्य० १३० ।
दामणिसठिते-दामनिसंस्थितम् । सूर्य० १३० ।
दामणी-दामनि -पशुरज्जुसंस्थानम् । जं० प्र० ५०१ । प्रश्न० ८४ ।
दामण्णगो-दामन्नक -परलोककथविषये मणिकारश्रेष्ठिपुत्रस्य उदाहरणम् । आव० ८३३ ।
दामनी-द्वात्रिंशतलक्षणेषु लक्षणम् । जीवा० २७६ ।
दामा-दामा-पाशकविशेष । विपा० ५६ ।
दामिओ-दामित । आव० ३६६ ।
दामिणि-दामिनी । प्रश्न० ७० । गवादीनां बन्धविशेषभूता रज्जु । भग० ७१२ ।
दाय-दाय -सामान्यदानम् । ओघ० ६ । दानम् । विपा० ७७ । पर्वदिवसादौ दानम् । ज्ञाता० ८३ । दाय-धनविभागम् । जं० प्र० १४२ ।
दायग-दायक-दायकदोषदुष्ट, षष्ठ एषणादोष । पिण्ड० १४७ । दाता-बालवृद्धादयोग्य. । एषणादोषाणां षष्ठो भेदः । आचा० ३४५ ।

दायगसुद्ध–दायकशुद्ध–यत्र दाता औदार्यादिगुणान्वित । विपा० ९२। यत्राशसादिदोषरहितत्वात् दायक शुद्ध । भग० ६६१ ।
दायणा–निर्वचनरूपा दापना । विशे० ११५३ । दापना दर्शना दापना वा प्ररूपणाविशेष । आव० ३८२ ।
दायणे–दर्शयति । ओघ० ५३ ।
दार–अपत्यादिसमुदाओ । नि० चू० प्र० १४७ आ । द्वारम् । जीवा० २६६ । द्वार–प्रासादादीनाम् । जीवा० २५८ । प्रश्न० ८ । द्वार–प्रतोलि । आव० १३६ । ज्ञाता० ८१ । द्वार–उपाय । प्रश्न० ११२ । द्वार–प्रवेशमुखम् । प्रश्न० १३६, दश० १४ । द्वार–व्याख्यानमुखम् । उत्त० ७३ । द्वार–प्राकारद्वारिका । औप० ३ । द्वारम् । ओघ० २३ । द्वार–खडक्किका । भग० २३८ । द्वार–ग्रामस्य मुख, ग्रामप्रवेश । बृ० द्वि० १ अ । द्वार–विजयादि । प्रज्ञा० ७१ । द्वार–प्रवेशमुखम् । दश० ४ । द्वार–गाहामयम् । दश० १८४ ।
दारए–दारयति–स्फोटयति । ज्ञाता० ८१ ।
दारगरूव–दारकरूपम् । आव० ३५३ ।
दारगसाला–लेखशाला । बृ० द्वि० १०७ अ ।
दारगोउर–गोपुरद्वाराणि । सम० १३८ ।
दारचेडाओ–द्वारपिण्ड्यौ–द्वारशाखे । ज० प्र० ४८ ।
दारपाए–द्वारपात–रन्ध्रकरणम् । पिण्ड० ६४ ।
दारपिंडी–द्वारपिण्डी–द्वारशाखा । जीवा० ३५१ ।
दारपालो–द्वारपाल । आव० १७३ ।
दारसाहा–द्वारशाखा–द्वारपिण्डी । जीवा० ३५६ ।
दारा–अणुओगा । नि० चू० तृ० ७६ आ । द्वाराणीव द्वाराणि–प्रवेशमुखानि, एवस्यानकाध्ययनपुरस्यार्थाधिगमोपाया इत्यर्थ । ठाणा० ४ । द्वाराणि–उपाया । ठाणा० ३१६ । धर्मागमस्योपाय । सम० ११ । द्वाराणि । अनु० १७१ ।
दाराइ–प्रवेशमुखानि । जं० प्र० ५ ।
दारिद्दय–दारिद्र्य । नदी० १११ ।
दारिय–दारिका–डिक्करिका । आचा० ४११ । दारिका । आव० ३७१ ।
दारुआ–दारूं–काष्ठकम् । जं० प्र० १६ ।
दारुए–दारुक । उत्त० ३७६ । दारुक–अन्तकृद्दशाना तृतीयवर्गस्य द्वादशममध्ययनम् । अन्त० ३ ।
दारुकम्मगारो–दारुकमकर–वर्धक्यादि । दश० २६० ।
दारुग–दारुक–काष्ठम् । उत्त० ४१३ । दारुक । उत्त० ११८ ।
दारुगदंडे–दारुदण्डकम् । बृ० प्र० १७३ आ ।
दारुण–दारुण–अनिष्टम् । दश० २३२ । रौद्र । ज्ञाता० ८० । असह्यम् । आचा० १६४ । दारुणसील–दारुण कक्कस वा । दश० चू० १२३ ।
दारुणपरिणामो–दारुणपरिणाम–पापाना कर्मणा चौर्यादि कृतानामशुभविपाक । दश० ११३ ।
दारुणा–दारयन्ति जनमनासीति दारुणा–विलपिताऽऽक्रन्दितादय । उत्त० ३०८ । दारयन्ति मन्दसत्वानो सयमविषया धृतिमितिदारुणा । उत्त० ११२ ।
दारुते–दारुक–वासुदेवस्य पुत्र, अरिष्टनेमिनाथस्य शिष्य । ठाणा० ४५७ ।
दारुदडय–अग्रभागे ऊर्णिकादशायुतो दण्ड, दण्डस्याग्रभागे ऊर्णिकादशिका बध्यन्ते तत् दारुदण्डकम् । बृ० तृ० १०३ अ ।
दारुपव्वय–दारुनिर्मापित इव पर्वतक दारुपर्वतक । जीवा० २०० ।
दारुपव्वयगा–दारुनिर्मापिता इव पर्वतक । ज० प्र० ४४ ।
दारुमडे–भरतक्षेत्रे आगामिन्यां चतुर्विंशतिकायां द्वाविंशतितमतीर्थंकरस्य पूर्वभवनाम । सम० १५४ ।
दारुय– । ज्ञाता० २१७ ।
दारुसकम–दारुसक्रम । आचा० २०२ ।
दाल–मूग । प्रश्न० १४१ ।
दालाणि–अवदृट्टिणाणि । दश० चू० १११ ।
दालित्ता–विदार्य । प्रज्ञा० ४८ । दलयित्वा–विदार्य । जीवा० ४० ।
दालिम–दाडिमं–फलविशेष । प्रज्ञा० ३२८ । दाडिमं–वृक्षविशेष । प्रज्ञा० ३२ ।
दालिमपाणग–पानकभेद । आचा० ३४७ ।
दालियव–दालिकाम्ल दध्यादि । प्रश्न० १६३ ।

**निरवेक्खो**–निरपेक्ष –निरभिलाष निरभिष्वङ्ग । उत्त० २६६ । निरपेक्ष इहा-पभविकापायभयरहित । आव० ५६० ।

**निरस्साविणो**–निष्क्रान्ता आश्राविभ्य प्राग्वत् सन्धिमो निराश्राविणी । उत्त० ५०६ ।

**निराग**–निरन्तराय । उत्त० ८६ ।

**निरागार**–अपवादशून्यम् । आउ० ।

**निरामया**–रोगरहित । आव० ४१६ ।

**निरामयामय**–निरामयामय नीरोगस्याऽऽमयभाव रोगोत्पत्ति । व्य० १३१ ।

**निरामिस**–निरामिषा परित्यक्ताभिष्वङ्गहेतु । उत्त० ४१० ।

**निराय**–नितराम् । आव० २२२, ७०० ।

**निरारम्भे**–निर्गत आरम्भात्–असत्क्रियाप्रवर्त्तनलक्षणान्निति निरारम्भ । उत्त० ६६ ।

**निरालम्बण**–निष्कारण प्रत्यपायसम्भवो वा त्राणायाऽऽलम्बनीयवस्तुवर्जित । ज्ञाता० १२८ । निरालम्बन – ऐहिकामुष्मिकाशंसारहित । आचा० ४३१ ।

**निरालोगा**–निरालोका –निरस्तप्रकाशा निरस्तदृष्टिप्रसरा वा । भग० ३०६ ।

**निरावरण**–क्षायिकम् । ज्ञाता० १२३ ।

**निरासो**–निराशस –इह परलोकाशंसाविप्रमुक्त । आव० ५६२ ।

**निरासंसे**–निराशंस –ऐहिकामुष्मिकाशंसारहित । आचा० ४११ ।

**निरिक्खिअ**–निरीक्षिता मनोरथपरम्परासम्पत्तिसम्भवा विनिश्चयसमुत्पन्नसम्मदविकाशिलोचनरालोकिता । नंदी० १६२ ।

**निरुंभइ**–निरुणद्धि । आव० ७८३ ।

**निरुंभति**–निरुन्धति । आव० २७७ ।

**निरुभा**– । ज्ञाता० २२१ ।

**निरुक्ति**–क्रियाकारकभेदपर्यायै शब्दार्थकथनम् । आव० ३६३ । वस्तुविषयस्य सामायिकस्य क्रिया कारकभेदपर्यायै शब्दार्थकथन-निर्वचनम् । विशे० ११०६ ।

**निरुक्तिद्वारम्**–एकार्थनामविधानरूपत्वात्तस्य । प्रश्न० ४ ।

**निरुच्छ्वास**–निश्चल । व्य० प्र० १६८ आ ।

**निरुत्त**–निरुक्त निश्चितमुक्त अक्षरार्थमित्यर्थ । बृ० प्र० ३ अ । निरुक्त निश्चितमुक्तमन्वयरूपम् । दश० २६१ । निरुक्त–शब्दव्युत्पत्तिकारकशास्त्रम् । भग० ११४ । निरुक्त शब्दनिरुक्तिप्रतिपादक । औप० ६३ । शब्दनिरुक्तप्रतिपादक । ज्ञाता० ११० ।

**निरुत्ती**–निश्चिता उक्ति निरुक्ति । अनु०२६० । व्युत्पत्ति । अनु० २६४ ।

**निरुत्थाई**–न निमित्त विनोत्थानशीलो निरुत्थायी । उत्त० ५८ ।

**निरुद्ध**–परिगलितम् । आचा० १६१ । आवृतम् । सूत्र० ७४ । विनाशित । व्य० प्र० २४१ । निरुद्ध । उत्त० ५८२ । अध्यवसानादिभिरुपक्रमणकारणैरवष्टब्ध । उत्त० २ ३ । अल्प । ठाणा० १८१ । निरुद्ध–अर्धस्तोकः, स्तोककालीनम् । सूत्र० २५० । विनाशित । व्य० प्र० २४१ अ ।

**निरुद्धगतय**–सिद्धा । उत्त० ६८४ ।

**निरुद्धभवे**–निरुद्धभव –निरुद्धायतनजन्मा चरमभवप्राप्तः । भग० १११ ।

**निरुद्धभवपवंचे**–अप्राप्तभवविस्तार । भग० १११ ।

**निरुवकिट्ठ**–निरुपक्लिष्ट –व्याधिना प्राक् साम्प्रत वा नभिभूत । भग० २७६ । निरुपक्लिष्ट व्याधिनी प्राक साम्प्रत चानभिभूत । अनु० १७१ ।

**निरुवगारी**–निरुपकारी गुरूणामनुपकारक सर्वथा गुरुकृत्येष्वप्रवर्तक । विशे० ६२५ ।

**निरुवट्ठाणा**–निर्गतमुपस्थान–उद्यमो येषां ते निरुपस्थाना सवज्ञप्रणीतसदाचारानुष्ठानविकला । आचा० २२७ ।

**निरुवलेव**–निरुपलेप मूत्रविष्ठापूपलेपरहितम् । जीवा० २७७ । निरुपलेप तथाविधबन्धहेतुभावेन तथाविधकर्मानुपादानात् । ज्ञाता० १०४ ।

**निरुवसग्गो**–निरुपसर्ग मोक्ष । आव० ७८७ ।

**निरुवसग्गवत्तिया**–निरुपसर्गप्रत्यय मोक्षनिमित्तम् । आव० ७८६ ।

**निरुवहए**–निरुपहत वातादिभिरनुपहत । ज्ञाता० ६१ ।

**निरुवहय**–निरुपहत निरोगम् । प्रश्न० ७६ । निरुपहतं

खंजनादिदोषरहितम् । बृ० द्वि० २२६ आ । निरुपहतो निरोगः । बृ० तृ० २५४ अ ।
निरुवहया-निरुपहतः निरुपहतेन्द्रियता । आव० ३४१ ।
निरुवगारी-निरुपकर्तुं शीलमस्येति निरुपकारी । आव० १०० ।
निरुव्विग्गा-निरुद्विग्नः सदैव अनुकूलविषयप्राप्तेः । ज्ञाता० ६७ ।
निरुह्-निरुहः-अनुवासः । विपा० ४१ ।
निरुहा-अनुवासना । ज्ञाता० १८३ ।
निरेई-निरेजी-निष्प्रकम्पः । आव० ७७५ ।
निरेयकाओ-निरेजकायः-निष्प्रकम्पदेहः । आव० ७८० ।
निरेयणा-निरेजनाः कम्पक्रियानिमित्तविरहात् । प्रज्ञा० ६१० ।
निरोदरं-निरुदर-विकृतोदररहितम् । जीवा० २७५ । निरुदरं-विकृतोदररहित, अल्पत्वेनाभावविवक्षणात् । जं० प्र० ११४ ।
निरोयए-रोगवर्जितः । ज्ञाता० ५ ।
निरोवट्टो-निरपवर्तनः-अपवर्तनारहितः । विशे० ८११ ।
निरोह-निरोधः-अभावः । उत्त० २८४ । नियन्त्रणा । उत्त० ५८६ । निरोधः । ओघ० १३८ । आव० ३७८ । निरोधः-ग्रहणम् । उत्त० ११५ । निरोधः-स्थापनम् । आव० ६३३ । निरोधनं निरोधः प्रलयकरणम् । आव० ५८३ ।
निर्-आधिक्ये । अनु० २६५ ।
निर्गमः-विहारः-प्रमाणम् । ठाणा० ४३५ ।
निर्गमभूमिः-स्थण्डिलभूमिः । आव० ५२४ ।
निर्घण्टः-नामकोशः । निरय० २१ ।
निर्घाटितः-पङ्क्तेर्बहिष्कृतः । बृ० प्र० १६१ अ ।
निर्जरितवन्तः-प्रदेशपरिशाटनतः । ठाणा० १७६ ।
निर्झरं-श्रोतादिविवरम् । १३८ ।
निर्देशः-आज्ञा । नंदी० १६० । विज्ञार्थमात्रप्रतिपादनम् । अनु० १३४ ।
निर्देशदोषः-यत्र निर्दिष्टपदानामेकवाक्यता न क्रियते । अनु० २६२ ।
निर्दोषं-सर्वदोषविप्रमुक्तम् । अनु० २६२ ।
निर्बन्धं-हठः- । नंदी० १५३ । आचा० २४८ ।
निर्भजना-निश्चिता भजना निर्भजना-निश्चितो भागः । आचा० ८६ ।
निर्मर्हेलं-नाटकविशेषः । पिण्ड० १३८ ।
निर्माण-निर्मिण जातिलिंगाकृतिव्यवस्थानियामकम् । ठ० ८१२ ।
निर्म्मलाः-कठिनमलाभावात् धौतवस्त्रवत् । ठाणा० २३२ ।
निर्यन्-निर्गच्छन् ।
निर्याणं-अवसानम् । उत्त० ४८३ ।
निर्यास-कर्पूरादिः गन्धद्रव्यविशेषः । जीवा० १३६ ।
निर्युक्तिः- । सम० ११२, १०६ ।
निर्युक्त्यनुगमः-अनुगमे द्वितीयो भेदः । स्थान० ६ ।
निर्यानं-बहिर्निर्गमो । नि० चू० प्र० २७३ अ ।
निर्लेपं-आयामसौवीरादि । आव० ५७२ । पृथुकादिपुरुहतः । ठाणा० १८६ ।
निर्लोठनीय-निरुत्तरीकरणम् । नंदी० १५२ ।
निर्वर्त्तनाधिकरणक्रिया-अधिकरणक्रियायाः प्रथमो भेदः, खड्गादीनां तन्मुष्ट्यादीनां च निर्वर्त्तनलक्षणा । प्रज्ञ० ३७ ।
निर्वर्तित-कृतं, अभ्यस्तम् । आव० ५६१ ।
निर्वर्तितवन्तः-अनुभूतवन्तः । ठाणा० ४४६ ।
निर्वर्त्यते-आह्रियते । जीवा० १४ ।
निर्वलति-निवर्त्तते । नंदी० १५८ ।
निर्विकृतिः- । आव० ८५३ ।
निर्विग(कृ)तिकादि-घृतादिसङ्घट्टनादौ तपः । आव० ७६४ ।
निर्विशमानकं-आसेवकः, परिहारविशुद्धचारित्रे प्रथमः । ठाणा० ३२४ ।
निर्विशमानका-परिहारविशुद्धिचारित्रस्यासेवकाः साधवः विशे० ५५४ ।
निर्विशमाना-ये परिहारविशुद्धितपोऽनुचरन्ति परिहारिका इत्यर्थः । ठाणा० १६८ ।
निर्विषयम्- । ठाणा० ४०२ ।
निर्विष्टं-अलब्धं-अनुपात्तं स्यादित्यर्थः । दत्तार्थत्वात् । ठाणा० ३१४ ।

**निर्विष्टकाया.**-आसेवितपरिहारविशुद्धचारित्रकायास्तु मुनयः । विशे० ५५४ ।

**निर्विष्टकायिकं**-यस्तु निर्विष्टकायिकानामासेवितविवक्षितचारित्रकायानां तत् । ठाणा० ३२४ ।

**निर्वृत्तिः**-द्रव्येन्द्रियभेदः । प्रज्ञा० २४ । भग० ८७ । निष्पत्तिः । ठाणा० २८६ । प्रतिविशिष्टः संस्थानविशेषः । जीवा० १६ । नंदी० ७५ ।

**निर्वेदः**-सम्यक्त्वस्य तृतीयं लक्षणम् । आव० ५६१ ।

**निर्वेष्टना**- । आव० ३३१ ।

**निर्व्याघात**-यस्सूत्रार्थनिष्ठितः उत्सर्गतो द्वादश समाः कृतपरिकर्मा सन् काल एव करोति । ठाणा० ६५ । पादपोपगमनस्य द्वितीयो भेदः । सिंहाद्युपद्रवव्याघाताभावः । दश० २६ ।

**निर्व्यूहना**-अपाकरणम् । व्य० प्र० १८५ अ ।

**निर्हरणं**-निस्सारणम् । ठाणा० ६४ ।

**निर्हारिलाला**-कृमिसूत्रम् । ठाणा० २१६ ।

**निलओ**-निलयः । आव० ६८० ।

**निलयः**-आधायाः परावर्तितद्वारे श्रेष्ठी, वसन्तपुरे श्रेष्ठी । पिण्ड १०० । उपाश्रयः । प्रश्न० १२८ ।

**निलिच्छमाणा**-निरीक्षमाणाः । व्य० प्र० १३० अ ।

**निलीयंति**-निलीयन्ते-विनश्यन्ति । भग० २४६ ।

**निलुक्क**-(देशी०) विरलः । आव० १८६ । आचा० ४२४ ।

**निलुक्किउं**-निलातुम् । आव० ३१६ ।

**निल्लंछणं**-निर्लाञ्छनं वर्द्धितकरणम् । प्रश्न० ३८ ।

**निल्लंछणकम्म**-निर्लाञ्छनकर्म-पञ्चदशकर्मादाने द्वादशम । आव० ८२६ । निर्लाञ्छनकर्म-वधितकरणम् । उपा० [illegible] ।

**निल्लालिय**-निर्लालिता निष्काशिता । उपा० २२ । विवृतमुखाभिःसारितम् । ज्ञाता० १३७ ।

**निल्लालियग्ग**-निर्लालिताग्रा प्रसारिताग्रा । ज्ञाता० १६ ।

**निल्लेव**-निर्लेपः अत्यन्तसंश्लेषात्तन्मयता गतः । भग० २७७ अत्यन्तसंश्लेषात् तन्मयतागतवालाग्रलेपापहारान्निर्लेपः । अनु० १८० । निर्लेप.-भूमिभित्त्यादिसंश्लिष्टसिकतालेपाभावात् । भग० ६७६ । निर्लेपः-निष्ठामुपगतः । जीवा० १४१ ।

**निल्लेवण**-निर्लेपनः-रजकः । व्य० प्र० १०४ अ ।

**निवज्जइ**-निपद्यते-शेते । ज्ञाता० २०५ ।

**निवज्जणा**-स्वपन्ति । ओघ० १०७ ।

**निवज्जाविओ**-निमज्जितः । आव० २२७ ।

**निवज्जावेति**- । निरय० ११ ।

**निवज्झंति**-निर्वाप्यन्ते नितरामभ्युपतमरणं प्रपद्यन्ते । व्य० द्वि० ४२४ आ ।

**निवट्टगं**-निर्वर्तितम् । आव० ७६२ ।

**निवडइ**-निपतति । ज्ञाता० १६८ । निपतति-शिथिलवृन्तबन्धनत्वात् भ्रश्यति । उत्त० ३३३ ।

**निवण्ण**-शयितः । बृ० तृ० १६८ आ । निविण्ण.-सन्निविष्टो दण्डायतादिना । आव० ५६४ ।

**निवण्णा**-सुप्ता । नि० चू० प्र० २०४ आ ।

**निवण्णुस्सिओ**-निवण्णोत्सृतः । आव० ७७२ ।

**निवतितं**-उपरि पतितं सत् पीडयति सन्निपतितं-स्वविषभृद्दृष्टिविषं च । ठाणा० ३७५ ।

**निवन्ना**-निषण्णः,स्वग्वर्तितः । बृ० द्वि० १३ आ । निषण्णः । आव० ६७५ । शयानः । व्य० द्वि० ३११ आ । निष्पन्नः-उपसम्पन्न आश्रितः । भग० १६४ । निवण्णः । आव० ७७२ ।

**निवन्ननिवन्नगो**-निवण्णनिवण्णः । आव० ७७२ ।

**निवन्ना**-निर्वर्णा । ठाणा० २६६ ।

**निवयउप्पयं**-निपातोत्पातं-दिव्यनाट्यविधिः । जं० प्र० ४१२, ४१८ ।

**निवया**-निवाताः । आचा० ३२६ ।

**निवर्तनं**-गन्तव्य भिक्षाया इत्यर्थः । ओघ० १७४ ।

**निवर्तन्ते**-न गृह्णन्ति । ओघ० २०१ ।

**निवर्तितं**-उर्ध्वा परित्याज्य । ठाणा० ३८४ ।

**निवर्त्यं**-असारान् पृथक्कृत्येति । ठाणा० ३८४ ।

**निवसणं**-निवसनं परिधानम् । प्रज्ञा० ६६ । ज्ञाता० २०० ।

**निवसनं**-विशिष्टरचनारचितपरिधानलक्षणम् । अनु० १४३ ।

**निवसमानः**-वसन् । आव० ६४४ ।

**निवह**-सङ्घातः । आव० ६२ ।

**निवाई**-निपतितुं शीलमस्येति विगृह्य णिनिः निपतनं वा

निपातः योऽस्यास्तीति निपाती । वाचा० २०९ ।
**निवाए**-निपातः चन्द्रसूर्यैः सह सम्पातः । सूर्य० १०० ।
**निवाओ**-निपातः स्पर्शनम् । बृ० तृ० १३ अ ।
**निवाडेइ**-निपातयति लगयति । जीवा० २५५ ।
**निवात**-निपातः अवकाशः । व्य० द्वि० २७४ आ । निपातनमवकाशः । व्य० द्वि० २८१ आ ।
**निवाता**-या तु शीतकाले पूर्वाह्णे उपलेपनकरणेन रात्रौ व्यपगता स्नेहा जायते सा । बृ० प्र० २६३ अ ।
**निवाय**-तत्तदर्थद्योतनाय तेषु तेषु स्थानेषु निपतन्तीति निपाताः । प्रश्न० ११७ ।
**निवायगंभीरा**-निर्वातगम्भीरा-निर्वातविशाला । भग० ३१३ ।
**निवायणं**-निपातनं गर्त्तादौ क्षेपणम् । प्रश्न० २२ ।
**निवाया**-निर्वाता वायु प्रवेशरहिता । भग० ३१३ ।
**निवासो**-भत्ताराणुप्पयाण । दश० चू० १४१ ।
**निविज्जंतो**-निविद्यते । आव० २८६ ।
**निविट्ठ**-निविष्टं-परिभुक्तम् । प्रश्न० ७१ । निकाचितः । ज० प्र० २७८ ।
**निविट्ठसंचिअ**-निविष्टसंचितः निकाचिततया संचितः । ज० प्र० २७८ ।
**निविट्ठाइं**-स्थापितानि । भग० ५६६ ।
**निविण्ण**-निर्विण्णाः उद्विग्नाः संसारभयात् । उत्त० ३६७।
*निवित्ति-निवृत्तिः-अन्यदर्शनाभिहिता । आचा० १७७ ।*
**निवुड्ढदेवित्तए**-निवृद्धो देवः । आचा० ३८६ ।
**निवुड्ढी**-निर्वृद्धिः शरीरस्यैव हानिः । ठाणा० ३५६ ।
**निवुड्ढेत्ता**-निवर्ध्य हापयित्वा । सम० ८६ ।
**निवुड्ढमाणो**-निर्वेष्ट्यम् हापयन् । सूर्य० २६, ४३ ।
**निवृत्तिः**-आकारः द्रव्येन्द्रियविशेषः । ठाणा० ३३४ ।
**निवृत्तिबादरः**-दर्शनसप्तके उपशान्ते प्राप्तव्यं गुणस्थानकम्। आव० ८२ ।
**निवेढेमाणो**-निर्वेष्टयन् – पूर्वपूर्वमण्डलगतान्तरपरिमाणात् हापयन् ।
**निवेयणपिंड**-सवाइय अणोवाइय वा जं पुण्णयं मापि-मह सव्वाण जक्खमहूडिमादियाणनिवेदिज्जति सो निवे-यणपिंडो । नि० चू० द्वि० २३ अ ।
**निवेश**-स्थापनः । नंदी० १६१ ।
**निवेशनं**-गुरोर्निवेशनं स्थानं यस्यासौ तन्निवेशनः । आचा० २१६ ।
**निवेशना**-स्थापना । उत्त० ६३२ ।
**निवेस**-निवेशः निवेशो नाम यत्र साथ आवासितः । बृ० प्र० १८१ आ । निवेश-स्थापना अभिनवग्रामा-दीनाम् । ठाणा० ४४६ । आयः । ओघ० १७९ ।
**निवेसण**-निवेशमानि गृहाणि । उत्त० ३८७ । निवेशनं गृहम् । व्य० द्वि० ३३७ अ । उपाश्रयप्रतिबद्धपाट-कम् । बृ० तृ० १४६ आ । निवेशनं-महागृहपरिवारभूत-गृहसमुदायरूपम् । बृ० प्र० १४६ अ । त्रिप्रभृतीनां गृहाणामाभोगः । बृ० तृ० २३ आ । पाटकः । बृ० द्वि० १८१ आ । *निवेशनम् । आव० ६३६ ।* निवेशनं एकनिष्क्रमणप्रवेशानि द्व्यादिगृहाणि । पिण्ड० १०३ ।
**निव्व**- । ठाणा० ४६२ ।
**नि०वए**-अणुव्रतरहितः । ज्ञाता० २३८ ।
**नि०वओ**-अवेदनः । मर० ।
**नि०वट्ट**-निर्वर्त्त । पउ० २७-१६ ।
**नि०वट्टण**-निवर्तनानि मार्गनिर्घटनस्थानानि । ज्ञात० ८१ ।
**नि०वट्टयित्ताणं**-निवर्त्य जीवप्रदेशेभ्यः शरीरकं पृथक्क-रणेरयर्थः । ठाणा० ६० ।
**नि०वड्डिम**-निर्वर्तितं-बद्धास्थि । दश० २१६ ।
*नि०वण-निरणः मषक्षतादिरहितः । ओघ० २११ ।* निर्व्रणं-निरतिचारम् । प्रश्न० १२१ । निर्व्रणं-व्रणरहितम् । आघ० ३० । व्रणकं रहितम् । ज्ञाता० ६१ । निरणं विस्फोटकादिक्षतरहितम् । जीवा० २७३ । निर्व्रणः-अक्षतः, अखण्डः । प्रश्न० ११० ।
**निव्वण्ण**-निर्विण्णः पापकर्मभ्यः पापकर्मसु वा कर्त्तव्येषु निवृत्तः । आचा० १६४ ।
**निव्वण्णंतो**-निर्वर्णयन् । आव० २१६ ।
**निव्वत्त**-निर्वृत्तः कृतः । ज्ञाता० ४१ ।
**निव्वतए**-निर्वृत्ते । आव० १२४ ।
**नि०वतण**-निर्वर्त्तनं-वधिशक्तितोमरादीनां निष्पादनम् । भग० १८३ । *निर्वर्त्तनं-असिशक्तिकुन्तितोमरादीनां मूल-*तो निष्पादनम् । प्रज्ञा० ४१६ ।

निव्वत्तणया–शरीरनिर्वृत्तिः । सम० १४६ ।
निव्वत्तणा–निर्वर्त्तना इन्द्रियाणाम् । आव० ३४१ । निर्वर्त्तना-प्रथमतो घटना । बृ० द्वि० २३४ अ । निर्वर्त्तना-बाह्याभ्यन्तररूपा या निर्वृत्तिः–आकारमात्रस्य निष्पादनम् । प्रज्ञा० ३०६ ।
निव्वत्तणाधिगरणिया–निर्वर्त्तनं – असिशक्तिकुन्ततोमरादीनां मूलतो निष्पादनं तदेवाधिकरणिकी निर्वर्तनाधिकरणिकी, पञ्चविधस्य वा शरीरस्य निष्पादनं निर्वर्त्तनाधिकरणिकी । प्रज्ञा० ४३६ ।
निव्वत्ति–निर्वृत्तिः अन्धनम् । भग० ५३३ ।
निव्वत्तिज्जमाणे–निर्वृत्यमानं नितरां वर्त्तुलीक्रियमाण प्रत्यन्ताकर्षणेन । भग० ९३ ।
निव्वत्तिए–निर्वृत्तितं वृत्तीकृतं–मण्डलाकारं कृतम् । भग० ९३ ।
निव्वत्तिय–निर्वर्तितं–रौद्रध्यानादिना कृतम् । आव० २५८ ।
निव्वपंते–उत्पतत: । आव० २०३ ।
निव्वलिया–निर्दलिताः छुटाः । विशे० ५४१ ।
निव्वाघाइम–निर्व्याघातिमं व्याघातिमाभिर्गतं स्वाभाविकमिति । जीवा० ३८४ ।
निव्वाघाए–निर्व्याघातः–कारणाभावः । जं० प्र० १५० ।
निव्वाघाओ–निर्व्याघातः–क्षणिकः । ओघ० २०० ।
निव्वाघात–निर्व्याघातं–न कश्चिद् यद्व्याघातायां धर्मकथादिर्वा कालव्याघातः वैदेशिकादिव्याघातो वा । ओघ० २०१ ।
निव्वाघायं–व्याघातस्याभावो निर्व्याघातम् । जीवा० ३६९ । अप्रतिहतम् । ज्ञाता० १२३ ।
निव्वाण–मोक्षस्तद्धेतुत्वाद् निर्वाणम् । अहिंसायाः प्रथमं नाम । प्रश्न० ९९ । सकलकर्मविरहज सुखम् । ज्ञाता० ५१ । सर्वद्वन्द्वोपरतिस्वभावम् । सूत्र० ३८ । निर्वृतिः–सकलकर्मक्षयजमात्यन्तिकं सुखम् । आव० ७६१ । निर्वाणं निर्वृतिः अशेषकर्मरोगापगमेन जीवस्य स्वरूपेऽवस्थानं मुक्तिरमिति । आव० ६६ । कर्मकृतविकाररहितत्वम् । ठाणा० १५७ । अशेष कर्मक्षयस्नदवाप्तो वा विशिष्टाकाशप्रदेश: । आचा० १५१ । निर्वाण–मोक्षः । आव० ५४३ । निर्वाणं–निर्वृतिः सामान्येन सुखम् । मोक्षः । आ० ५८४ । निर्वान्ति – कर्मानलविध्यापनाच्छीतो भवन्त्यस्मिन् जन्तव इति निर्वाणम् । उत्त० ५११ । शान्ति । महाप० ।
निव्वाणमग्ग–निर्वाणमार्गः–असाधारणरत्नत्रयरूप: । जं० प्र० १५१ । सकलकर्मविरहजसुखोपायः । भग० ४७१ ।
निव्वाय–निर्वातं निर्व्याघातः । ज्ञाता० ४१ ।
निव्वावए–निर्वापयेत् अभावमापादयेत् । दश० २२८ ।
निव्वावण–निर्वापणं–विध्यापनम् । दश० १५४ ।
निव्वाविय–निर्वापितं शीतलीकृतम् । ज्ञाता० २६ ।
निव्वावेति– भग० ३२६ ।
निव्वाहणाय–निर्वाहणाय–वस्त्राभ्यङ्गतैलादिना यापनार्थम् । उत्त० ५२४ ।
निव्वाहि–निर्वाहि–पृथक् कनिष्ठकम् । बृ० द्वि० ६० अ ।
निव्विद–निर्विन्दस्व जुगुप्सव । आचा० १४३ ।
निव्विदए–निर्विन्ते सम्यग् विचारयति । दश० १५६ ।
निव्विदेज्ज–निर्विद्येत–जुगुप्सयेत्, परिहरेत् । सूत्र० ७४ ।
निव्विगइ–निर्विकृतिकः निर्गतविकृतिपरिभोगः । दश० २८१ ।
निव्विगप्पो–निर्विकल्पः निःसंशयः । दश० १२६ ।
निव्विगार–निर्विकारं विभूपाभ्रूक्षेपादिविकाररहितम् । अनु० १४० ।
निव्विगिंतिए– । भग० ६२१ ।
निव्विज्जे–सम्यक्त्वाज्ञावचनरूपायाः निर्विद्यः । उत्त० ३४४ ।
निव्विट्ठ–निर्विष्ट–लब्धम् । जं० प्र० २१० ।
निव्विट्ठकाइय–निर्विष्टकायिक परिहारविशुद्धिचारित्रभेदविशेषः । प्रज्ञा० ६४ । निर्विष्टकायिकाः, आसेवितविवक्षितचारित्रकायाः । प्रज्ञा० ६४ । निर्विष्टकायिका नाम यैः परिहारविशुद्धिकं तपो व्यूढं, निर्विष्टः–आसेवितो विवक्षितचारित्रलक्षणः कायो यैस्ते निर्विष्टकायिकाः । बृ० तृ० २५१ अ ।
निव्विड्डंतो–निर्वेष्टयन् । आव० ३३६ ।
निव्विण्णचारी–चारः–अनुष्ठानं निर्विण्णस्य चारो निर्विण्णचारी । आचा० २१२ ।

निव्वितिगिच्छं-निर्विचिकित्सं, विचिकित्सा फलं प्रति सन्देहो, यथा-यतः क्लेशस्य फलं स्यादुत नेति तदभावो निर्विजुगुप्सं-जुगुप्सा वा यथा-किममी यतयो मलदिग्ध-देहाः ? प्रासुकजलस्थाने हि क इव दोषः स्यादित्यादिका निंदा तदभावो । उत्त० ५६७ । निर्विजुगुप्सः-साधु-जुगुप्सारहितः । दश० १०२ । निर्विचिकित्सः साध्वेव जिनदर्शनं किन्तु प्रवृत्तस्यापि सतो ममास्मात् फलं भविष्यति न भवितीति विकल्परहितः, सञ्जातनिश्चयः । दश० १०२ । फलं प्रति निःशङ्कः । ज्ञात० १०६ । निर्गता विचिकित्सा-मतिविभ्रमो यस्य सः निर्विचिकित्सः । दश० १०२ । विचिकित्सा-मतिविभ्रमः-फलं प्रति संशय इति यावत्, निर्गता विचिकित्सा यस्मादसौ निर्विचिकित्सः । प्रज्ञा० ५६ ।

निव्वित्ती-निर्वृत्तिः सकलावरणक्षयादुत्पत्तिः, प्रत्ययः । उत्त० ४१ ।

निव्विदुगुंछो-निर्विद्वज्जुगुप्सः साधुजुगुप्सारहितः । प्रज्ञा० ६१ ।

निव्वियत-निर्विकृतिकः-निर्गतो घृतादिविकृतिभ्यो यः स । ठाणा० २९८ ।

निव्विसओ-निर्विषयः । आव० २२१ ।

निव्विसति-निर्विशति उपभुङ्क्ते । व्य० द्वि० २६४ आ ।

निव्विसमाण-निर्विशमानका विवक्षितचारित्रसेवकाः । प्रज्ञा० ६४ । निर्विशमानकं, परिहारविशुद्धिचारित्रभेदवि-शेषः । प्रज्ञा०६४ । निर्विशमानक परिहारविशुद्धिकल्पं वह-मानाः । बृ० तृ० २५१ अ । परिहारविशुद्धिकल्पं वहमाना निर्विशमानका यैरसौ व्यूढस्ते । ठाणा० ३७४ ।

निव्विसमाणग-निर्विशमानकः-परिहारकल्पस्थितः । व्य० प्र० १३८ आ ।

निव्विसय-निर्विषयः । आव० १९२ । निर्विषयः-देशा-न्निष्कासितः । प्रश्न० ६० । निर्विषयः-शब्दादिविषय-रहितः, यद्वा विषयो-देशस्तद्विरहितः । उत्त० ४११ । निर्विशकः-उपभोक्ता । पिण्ड० ४७ ।

निव्विसया-निर्विषयता-देशाद्बहिः । आव० ४०१ ।

निव्वुइ-निर्वृतिः मनःस्वास्थ्यम् । प्रश्न० ४२ ।

निव्वुइकर-निर्वृतिकरः स्वास्थ्यनिबन्धनाकरणयोः प्रशस्त-भावकरविशेषः । आव० ४६६ ।

निव्वुइकरा-अष्टादशजिनस्य शिबिकानाम । सम० १५१ ।

निव्वुई-निर्वृतिः-स्वास्थ्यम्, अहिंसाया द्वितीयं नाम । प्रश्न० ९९ । निर्वृत्तिः-स्वास्थ्यम् । प्रश्न० ६४ । निर्वृत्तिः-प्रतिविशिष्टः सस्थानविशेषः । प्रज्ञा० २९३ । निर्वृत्तिः-तितिक्षोदाहरणे मथुराधिपतिजितशत्रुकन्या । आव० ७०२ । निर्वृत्तिः-जितशत्रुराजकन्या । उत्त० १४८ ।

निव्वुड-जीवविप्पजढं । दश० चू० ११ । निर्वृतं-अग्नि-दग्धोद्वृत्तम् । दश० ११७ । निर्वृतः-कषायोपशमाच्छीती-भूतः । सूत्र० २०७ । निर्वृतं निष्ठागतम् । निरावरणम् । भग० २१७ ।

निव्वुडा-तीर्थकरोपदेशवासितान्तःकरणा विषयकषायाग्नु-पशमान्निर्वृताः-शीतीभूताः । आचा० १९२ ।

निव्वुड्डो-निब्रुडितः । आव० ६४१ ।

निव्वुड्ढी-निवृद्धिः-विनस्य हानिः । भग० १४७ । निर्वृद्धिः-यथोक्तस्वरूपवृद्धयभावः । सूर्य० २४३ । निर्वृद्धिः-वृद्धेरभावः, हानिप्रतिभासः । जीवा० १४५ । निर्वृद्धिः-शरीरस्य हानिर्वातपित्तादिभिः, निशब्दस्याभावार्थत्वात् । ठाणा० ९६ ।

निव्वुता-वरिंपदिया सुही निव्वुता । नि० चू० प्र० २१२ आ ।

निव्वुती-निवृत्तिः-चित्तस्वास्थ्यम् । प्रश्न० १३३ ।

निव्वुयहियए-निर्वृत्त-स्वस्थीभूतं हृदयं-अन्तःकरणमस्येति निर्वृतहृदयः । उत्त० ५८१ ।

निव्वेअ-निर्वेदः-उद्वेगः । अनु० १३८ ।

निव्वेए-निर्वेदः-संसारविरक्तता । भग० ७२७ । निर्वेदः-धर्मकथायाश्चतुर्थो भेदः । दश० ११० ।

निव्वेगणी-निर्विद्यते-संसारादेर्निर्विण्णः क्रियते अनयेति-निर्वेदनी । ठाणा० २१० ।

निव्वेय-निर्वेदः-संसारोद्विग्नता । उत्त० ४४१ । निर्वेदः-निःकुमानुषत्वमित्यादेर्विरक्तता । बृ० प्र० ३८ अ । नरकतिर्यग्योनिः कुमानुषत्वं च एतत्प्ररूपणं निर्वेदहेतुत्वा-न्निर्वेदः । दश० ११३ ।

निव्वेयणी-निर्वेद्यते संसारनिर्विण्णो विधीयते श्रोता यकया सा निर्वेदनी । औप० ४६ ।

निव्वोदय–नीव्रोदकम् । आव० ४२६ ।
निश्रयः–संकेतस्मरणादि पूर्वको हि निश्रयः । विशे० ६१ । *निश्रयः–बहुबहुविधादिग्राहको हि विशेषावगमः ।* विशे० १६५ । भग० ७३६ ।
निश्रयकथा–सा चापवादकथा, पर्यायास्तिकनयकथा वा । सम० २४ ।
निश्चलमनाः–*श्रमणः तपस्युद्युक्तः समना वाऽऽसीत् निश्चलमना इत्यर्थः ।* आचा० ३०७ ।
निश्चितं–निकाचितं प्रमाणम् । ठाणा० ४३५ ।
निश्चितिः–माया, प्रतिष्ठा च । आव० ८०४ ।
निश्रयजिंहू–महाकुष्ठविशेषः । आचा० २३५ ।
निषण्णः– । आचा० २६२, २६४ ।
निषदन– । ठाणा० ३ ।
निषद्या–प्रणिपत्य पृच्छा । विशे० ८६० ।
निषद्यागतः–आसनस्थः । आव० ५४१ ।
निषधः–द्वारवत्यां बलदेवपुत्रः । विशे० ६१० । वर्षधरपर्वतविशेषः । प्रश्न० ६६ । ठाणा० ३२६ । निषधः । प्रश्न० ७३ ।
निषीधिका–आसनम् । उत्त० ७२ ।
निषेकः–*वितस्याबाधाकालं मुक्त्वा ज्ञानावरणीयादितया* निषेकः । ठाणा० १०१ । कर्म्मपुद्गलानां प्रतिसमयानुभवनरचनेति । ठाणा० २७६ ।
निष्काङ्क्षः–*दर्शनाभिलाषरहितः ।* उत्त० ५८८ ।
निष्कालयते–प्रमुच्यते । प्रश्न० ६० ।
निष्कुटः– । भग० २६ ।
निष्कुटनं–उपयोगनिरीक्षणम् । ओघ० १६७ ।
निष्ठा–पारम् । आव० २६६ ।
निष्ठितार्थः–अणिमाद्यैश्वर्यप्राप्त्या तथाविधमनुष्यकृत्यापेक्षया *सिद्धार्थः ।* जीवा० ४७ ।
निष्ठीवनं–खेलः । भग० ८७ । निष्ठ्यूतम् । आव० २३ ।
निष्ठुरं–कठोरम् । आव० ८३४ ।
निष्ठ्यूतं–निष्ठीवनम् । आव० २५ । नंदी० १६७ ।
निष्पक्वः–क्वथितः । जं० प्र० १०५ ।
निष्पङ्का–निकलङ्कविकलत्वात्–कर्द्दमविशेषरहितत्वात् वा । सम० १४० ।
निष्पन्नः–परिनिष्ठितः । आव० ४०८ । आचा० २६२ । आव० ६२७ ।
निसंत–निशान्तः श्रुतोऽवगतः । आचा० ३६६ । निशान्तः निःसचारवेला । बृ० द० २१२ अ । निशान्तः–गृहम् । बृ० द्वि० १५ आ । निशान्तः–परिचितः । आचा० २६६ । निशान्तः–रात्र्यवसानं, दिवसः । दश० २४६ । गृहम् । ज्ञाता० १४६ । निशमितः, श्रुतः । भग० ४६७ ।
निसंस–नृशंसं शूकावर्जितम् । प्रश्न० ११० । नृन्–नरान् शंसति–हिनस्तीति नृशंसः, नि शंसो–विगतश्लाघः । ज्ञाता० ८० ।
निसंतपडिसंते–निशान्तप्रतिनिशान्त–अत्यन्तश्रमणादुपरतः । बृ० द्वि० १५ आ ।
निसंसतिए–निःशयिकः–शौर्यातिशयादेव तत्साधयिष्याम्येवेत्येव प्रकृत्तिकः । ज्ञाता० ८० ।
निसग्ग–निसर्गः–स्वभावः । नि० चू० तृ० ६ अ । निसर्गः उत्सर्गः । व्य० द्वि० १० अ । निसर्गः स्वभावः । आव० २२८, ६०४, ८३८ । *प्रज्ञा० ५८ ।*
निसग्गरुइ–स्वभावत एव तत्त्वश्रद्धानम् । भग० ६२६ ।
निसग्गरुई–निसर्गः स्वभावः तेन रुचिः जिनप्रणीत तत्त्वा-*भिलाषरूपा यस्य स निसर्गरुचिः । प्रज्ञा० ५६ । निसर्गः–स्वभावस्तेन रुचिः–तत्त्वाभिलाषरूपाऽस्येति, निसर्गतो वा रुचिरिति निसर्गरुचिः, यो हि जातिस्मरणप्रतिभादिरूपया स्वमत्याऽवगतान् सद्भूतान् जीवादीन् पदार्थान् श्रद्धाति* स निसर्गरुचिः । ठाणा० ५०३ ।
निसज्जा–निषद्या–पुताभ्यां भूम्यामुपवेशनम् । औप० ४० ।
निसज्ज–रजोहरणनिषद्या । ओघ० ११२ ।
निसट्ठ–निसृष्ट' निसृष्टाङ्गा मुक्ताङ्गा । सम० ११७ । अत्यन्तम् । आव० २०६ । निसृष्टं–निश्चेष्टम् । दश० ६६ । निसृष्टं–अत्यर्थम् । प्रश्न० ५६ । निसृष्टं–प्रचुरम् । ओघ० ४८ ।
निसढ–निषधः–द्रहनाम । जं० प्र० ३०८ । निषधः बलदेवपुत्रः । आव० ६४ । पञ्चमवर्गे प्रथममध्ययनम् । निरय० ३६ ।
निसदा–निषण्णा । मर० ।
निसण्ण–निषण्णः । आव० ७७४ । निषण्णः–उपविष्टो

वीरासनादिना। आव० ५६४।
निसनुस्सिओ-निषण्णोत्सृत । आव० ७७२ ।
नसन्न-निषण्ण । ठाणा० २६१ । निषण्ण । आव० ७७२ ।
निसम्म-निशम्य-मनसा अवधार्य । भग० ८६ । निशम्य मनसाऽवधार्य । ठाणा० ११६ । निशम्य-निश्मिस्य । आचा० ३३१ । निशम्य-ज्ञात्वा । आचा० ३५० ।
निसम्मभासी-निशम्यभाषी । आचा० ३६२ ।
निसरइ-निसृजति निष्काशयति । जीवा० २४४ ।
निसह-निषध निषधवर्षधरपर्वते द्वितीय कूटम् । ठाणा० ७२ । ह्रदविशेष । ठाणा० ३२६ । निषध-वर्षधर-पर्वतविशेष । ठाणा० ६८ । निषध-बलीवर्द । सूर्य० ७१ ।
निसहद्दहे-ह्रदविशेष । ठाणा० ३२६ ।
निसाकप्पे-कायिकामात्रके मोक गृहीत्वा तेनाचमन कर्तव्यम्, अभिगतस्य गीतार्थस्याचीर्णमेतत्, एष च निशाकल्प उच्यते । बृ० मु० २०३ अ ।
निसापाहाणे-मुद्गादिदलनशिला । उपा० २१ ।
निसामिति-अवधारयन्ति । आचा० ४२४ ।
निसामेह-निसामयत शृणुत । आव० २२६ ।
निसाय-निषाद-पारासर, शूद्राब्राह्मणाभ्यां जात । आचा० ८ ।
निसाविहगा-वल्गुका । बृ० द्वि० १६७ आ ।
निसालोढे-शिलापुत्रक । उपा० २१ ।
निसिज्ज-स्वाध्यायादिभूमि । दश० २८१ ।
निसिज्जहरो-निषद्याधर । आव० ७४५ ।
निसिज्जा-क्रिया सहासनम् । सम०३६ । निषद्या स्वाध्यायभूम्यादिका यत्र निषद्यते । उत्त० ४३४ । निषद्या-रजोहरणवेष्टनक सौत्रिकमौर्णिक वा । बृ० द्वि० २५३ अ । निषद्या । आव० ३२३ ।
निसिज्जाओ-निषदनानि निषद्या-उपवेशनप्रकारास्तत्र* सनालम्पत्युत पादाभ्यामवस्थित । ठाणा० ३०२ ।
निसिट्ठ-निसृष्ट-अनुज्ञात आक्रान्तिकरस्तेनो वा । बृ० द्वि० १६७ अ । निसृष्ट अनुज्ञात । व्य० प्र० २३४ अ ।
निसिट्ठाइ-जीवेन नि सृष्टानि स्वप्रदेशेभ्यस्त्याजितानि । भग० ५६६ ।
निसिद्धप्पा-निषिद्धो मूलगुणोत्तरगुणातिचारेभ्य आत्मा येनेति निषिद्धात्मा । आव० २६७ ।
निसियरा-निशाचरा-पिशाचादयः । ओघ० १२५ ।
निसिया-निशिता तीक्ष्णा । उत्त० ३४६ ।
निसिर-निसृजेद् ब्रूयात् । दश० २३६ ।
निसिरइ-नि सृजति-क्षिपति । भग० ६३ । निसृजति-उत्सृजति । विशे० २०६ ।
निसिरणे-निसर्ग भाषाद्रव्याणां काययोगेनोत्सर्गक्रिया । दश० २०८ ।
निसिरे-व्युत्सृजति । आव० ६१८ ।
निसिरेज्जा-व्युत्सृजेत् । ओघ० १६७ ।
निसियत-निषीदन उपवेशनम् । दश० १५५ ।
निसीयण-निषीदन-उपवेशनम् । ओघ० २१४ । निषीदनम् । आव० ६२४ ।
निसीलो-नि शील गृहस्थः । सूत्र० ६ ।
निसीह-निशीथचविशेषम् । नंदी० २०६ । निशीथ-यद्रहसि पठ्यते व्याख्यायते वा । उत्त० २०४ । प्रच्छन्न-निषीथ बहुश्रुत, गुप्तार्थं वा, रहस्य पाठाद् रहस्योपदेशाच्च निशीथम् । आव० ४६४ ।
निसीहज्झयणं-आचाराङ्गे पञ्चविंशतितममध्ययनम् । सम० ४४ ।
निसीहऽभिहडे-निशीथाभ्याहृत-अविदितदायकभाव यत्। पिण्ड० १०३ ।
निसीहिता-निषेधेन निर्वृत्ता नैषधिकी-व्यापारान्तरनिषेधरूपा । ठाणा० ४११ ।
निसीहिय-नैषधिक-कायोत्सर्ग स्वाध्यायभूमिर्वा । सम० ३६ । स्वाध्यायस्थानम् । ठाणा० ३१४ । निषिध्यन्ते-निराक्रियन्ते अस्यां कर्माणीति नैषेधिकी-निर्वाणभूमि । उत्त० ३२१ । सकलकर्मनिराकरणलक्षणे भवा, मुक्ति-गति, प्रतिमा । उत्त० ३२१ । निषीधिका-स्वाध्याय-भूमि । आचा० ३६१ ।
निसीहिया-निषध-स्वाध्यायव्यतिरेकेण सकलव्यापार-प्रतिषेध तेन निवृत्ता नैषधिकी । व्य० प्र० १२७ अ । निषधेन-स्वाध्यायव्यतिरिक्तशेषव्यापारप्रतिषेधेन निवृत्ता

नैषेधिकी । व्य० प्र० १२७ आ । जत्थ सज्झायं करेति, सेज्जाए वा निसीहिएत्ति । दश० चू० ८५ । नैषेधिकी-वसतिप्रवेशे निषिद्धोऽहं गमनक्रियाया इति भणनम् । बृ० प्र० २२२ अ । नैषेधिकी । आव० ६७२ । निषीदन्त्यस्यामिति निषद्या स्थानम् । आव० ६५७ । बावीसपरीषहे दशमपरीषहः । आव० ६५७ । नैषेधिकी-प्राणातिपातादिनिवृत्ता । आव० ५४७ । नैषेधिकी-निषीदनस्थानं, द्वारकुड्यसमीपे नितम्बः । जीवा० ३६० । स्वाध्यायभूमिः । ज्ञाता० २०६ । निषेधे भवा नैषेधिकी-उपाश्रयाद्बहिः कर्त्तव्यव्यापारेऽव्यवसितेषु पुनस्तत्रैव प्रविशत साधोः शेषव्यापारनिषेधेनोपाश्रयप्रवेशसूचनादिति । अनु०१०३ । बहिर्व्यापारनिषेधेनोपाश्रयप्रवेशसूचनादिति । अनु०१०३ । स्वाध्यायभूमिः शून्यागारादिरूपा । भग० ३६० । सामादिषु प्रतिपन्नमासकल्पादेः स्वाध्यायादिनिमित्तं शय्यातो विविक्ततरोपाश्रये गत्वा निषीदनम् । भग० ३६१ । निषधेन निर्वृत्ता नैषेधिकी दशधा सामाचार्यां पञ्चमी । आव० २५६ । निषीधिका । ओघ० १७४ । नैषेधिकी स्वाध्यायभूमिः । दश० १८२ । नैषेधिकी निषेधनं निषेधः पापकर्मणो गमनादिक्रियायाश्च स प्रयोजनमस्याः नैषेधिकी-श्मशानादिका स्वाध्यायादिभूमिः निषद्या वा । उत्त० ८३ । दशधासामाचार्यां पञ्चमी । भग० ९२० ।

निसीहियाए-नैषेधिकी-निषीदनस्थानम् । राज० ६४ । निषीधिका-द्वितीयमध्ययनम् । आचा० ४०७ ।

निसीहियापरीसहे-शोऽद्रवेतरा च स्वाध्यायभूमिः, द्वाविंशतिपरीषहे दशमः । सम० ४० ।

निसीहियारए-निषीधिकारताः स्वाध्यायध्यायिनः । आचा० ३६६ ।

निसुंभंति-भूमौ पातयन्ति । आव० ६६० । कृकाटिकायां गृहीत्वा भूमौ पातयन्ति । सूत्र० १२५ ।

निसुंभ-निशुम्भः-पुरुषसिंहवासुदेवशत्रुः । आव० १६६ ।

निसुंभा-वैरोचनेन्द्रस्य द्वितीयाऽग्रमहिषी । भग० ५०३ । ज्ञाता० २५१ ।

निसेए-निषेकः-स्वस्याबाधाकालस्योपरि ज्ञानावरणीयादि-कर्मपुद्गलानां वेदनार्थमुपचयः । प्रज्ञा० २१२ ।

निसेक-निषेकः-कर्मपुद्गलानां प्रतिसमयमनुभवनार्थं रचना । भग० २८० ।

निसेज्जा-रयहरणस्योपरितनाः ओघ० १११ । जंमि निसण्णो अच्छइ । दश० चू० ५१ ।

निसेह-निषेधः । आव० ७६६ ।

निःसोत्र- । आचा० ३१३ ।

निस्त्रिंशः-नृशंस. । उत्त० ६५६ ।

निस्तारः- । नंदी० १६३ ।

निस्संकिय-नि शंकितः देशसर्वशङ्कारहितः । दश० १०१ । निर्गत शङ्कित यस्मादसौ निःशङ्कितः देशसर्वशङ्का-रहितः । प्रज्ञा० ५६ ।

निस्संगो-निःसङ्गः-विषयअस्नेहसङ्गरहितः । आव० ५६२ ।

निस्संचरो-निस्सञ्चारः-मनुष्यसञ्चारवर्जितः । आव० ६४१ ।

निस्संतिया-तं अहहियणयं दव्वं अण्णत्थ निस्संदिऊण तेण ताय पोऊ देइ । दश० चू० ८० ।

निस्संधिणा-निस्संधिः । प्रश्न० ।

निस्संधी-निःसन्धिः निर्विवरः । प्रश्न० १६ ।

निस्संस-नृशंसं शूकावर्जितम् । प्रश्न० २७ । निःशंसं वा श्लाघारहितम् ।

निस्स-दरिद्दो । नि० चू० प्र० १४१ अ ।

निस्सकयं-निश्राकृतं गच्छप्रतिबद्धम् । बृ० प्र० २७६ आ ।

निस्सग्गरुई-निसर्गः स्वभावस्तेन रुचिः तत्त्वाभिलाषरूपाऽस्येति निसर्गरुचिः । उत्त० ५६३ ।

निस्सण्णनिसण्णओ-निषण्णनिषण्णः । आव० ७७२ ।

निस्सयरा-स्व-कर्मानादिसन्तानसन्ततपनयनसमर्थानि निःस्वकराणि । आचा० ४३० ।

निस्सल्लो-निःशल्यः शल्यरहितः । आव० ७६१ ।

निस्सहः-स्थैर्यः । नंदी० १११ ।

निस्सा-निश्रा रागः । व्य० प्र० ७ अ । पक्षपातः । व्य० प्र० २२३ । निश्रा आलम्बनम् । आव० ५१६ । निश्रा-आलम्बनं, उपग्रहहेतुः । ठाणा० ३३६ ।

निस्साए-निश्राय-निश्रां कृत्वा । भग० १०९, ६६३ ।

निस्साणपदं-निश्रायते-संदभ्यतेऽसौ इति निश्राणं तच्च पदं च निश्राणपदं-अपवादपदम् । बृ० प्र० १२८ अ ।

अ ।

**निस्साधारण**-एकाचार्यप्रतिबद्ध क्षेत्रम् । बृ० द्वि० २८० अ ।

**निस्सारा**-नि सारा-प्रधानमर्मरहिता । ओघ० २१८ ।

**निस्सावयण**-निश्रया वचन निश्रावचनम्, कमपि सुशिष्य-मालम्ब्य यदन्यप्रबोधार्थं वचन तन्निश्रावचन, तद्यच विधेय-तयोच्यते तदाहरण निश्रावचनम् । ठाणा० २५३ । एक कञ्चननिश्राभूत कृत्वा या विचित्रोक्तिरसौ निश्रावच-नम् । दश० ४६ ।

**निस्सास**-निश्वास -निर्गम । भग० ४७० । नि श्वास -मुखादिना वायुनिर्गम । भग० ४७० । नि श्वास -सङ्ख्ये-याऽऽवलिका । जीवा० ३४४ ।

**निस्सासवायवोज्झ**- । आचा० ४२३ ।

**निस्सासविसो**-नि श्वासविष -उर परिसर्पविशेष । जीवा० ३९ ।

**निस्सिंघिय**-नि सिङ्घन नि सिङ्घितम् । विशे० २७४ ।

**निस्सिंचमाणे**-नि सिञ्चन्-हस्तोद्धरित प्रक्षिपन् । आचा० ३४ ।।

**निस्सिंचिया**-निषिच्य सद्भावनाद्रहित द्रव्यम-यत्र भाजने तेन दद्यात् उद्वर्तनभयेन आर्द्ररहितमुदकेन निषिच्य । दश० १७१ ।

**निस्सिए**-निश्रित -सारक्षादिधर्मविशिष्टमवगृह्णाति । ठाणा० ३६४ ।

**निस्सित**-निश्रित-राग आहारादिलिप्सा । ठाणा० ४४१ ।

**निस्सिय**-निसृत -निगत । अनु० १२६ ।

**निस्सील**-नि शील सामान्येन शुभस्वभावर्वाजतशीलवत्यादि। ठाणा० १३२ । अपगतशुभस्वभाव । ज्ञाता० २३८ ।

**निस्सीला**-निश्शीला महाव्रताणुव्रतविकला । भग० ३०६ । समाधानरहिता । भग० ५८२ । नि शीला-निगत-शुभस्वभावा दु शीला इत्यर्थ । ठाणा० १२६ ।

**निस्सेअस**-मोक्ष । नदी० १६५ ।

**निस्सेणि**-निश्रेणि । आचा० ३४४ । नि श्रेणि -अवतरणी । प्रश्न० ८ ।

**निस्सेयस**-नि श्रेयस -मोक्ष । भग० ११५ । उत्त० २६१ । नि श्रेयस -मोक्ष । भग० १६६ । नि श्रयस -निश्रितकल्याणम् । जीवा० २४२ ।

**निस्सेस**-नि शेष -सर्वं । भग० १६६ ।

**निहु**-स पुन कषाये कम्मभि परीषहोपसर्गैर्वा निहन्यत इति निह । आचा० १२५ । न्यग्भस्तात् । सूत्र० १२८ । निहन्यन्ते प्राणिन कर्मवशगा यस्मिन् तन्निहु-आघातस्थानम् । सूत्र० १३८ ।

**निहए**-निहत -कृतसमृद्धघपहार । औप० १२ ।

**निहट्टु**-निहत्य-स्थापयित्वा । ज्ञाता० २१० ।

**निहणति**-निघ्नन्ति । आव० १२३ ।

**निहणिसु**-निहतवन्त -क्षिप्तवन्त । आचा० ३१२ ।

**निहत्त**-निधत्त-उद्वर्तनापवर्तनकरणवर्जशेषकरणायोग्यत्वेन व्यवस्थापितम् । भग० ६० । निधत्त-निषिक्तम् । ठाणा० ३७६ । प्रश्ना० २१७ । भग० २८० । निधत्त-अपोह निषेक उच्यते । सम० १४७ ।

**निहय**-निक्षिप्तम् । आव० ७४३ । निहत निधत्त निश्रितं प्रमाणम् । ठाणा० ४३५ । निकाचित भूय उत्थानाभावेन मन्दीकृतम् । ज० प्र० ३८६ । निहत-क्षणमात्रमुत्थाना-भाव । जीवा० २४५ । निहता मारणात् । ठाणा० ४६३ ।

**निहयाणि**-निगतानि आकारमात्रगानि । उप० मा० ३२६ ।

**निहरणकारिण**-स्कन्धदायिन । बृ० प्र० १७१ अ ।

**निहरिऊण**-विश्राम्य । उप० मा० ४७३ ।

**निहस**-निकष -हेमरजतकल्पजीवादिपदार्थस्वरूपपरिज्ञान-हेतुत्वात् कषपट्टक । अनु० १०५ । निकष -वर्णक-सदृश । रेखा । भग० १२ । प्रश्न० ७० । निकष -कष-पट्टके रेखालक्षण । भग० १२ । निघर्षं -कषपट्टके रेखा । प्रश्न० ६५ ।

**निहाण**-निधान-परिग्रहस्य पञ्चम नाम । प्रश्न० ९२ । निधान-भूमिगतसहस्रादिसङ्ख्यद्रव्यस्य सञ्चय । भग० २०० ।

**निहाय**-निधाय-त्यक्त्वा । आच० ३११ । क्षिप्त्वा-त्यक्त्वा आच० २७४ । निधाय-परित्यज्य । सूत्र० ४०० ।

**निहार**-निर्गत -प्रमाणम् । ठाणा० ४३५ ।

**निहारिम**-दूरदेशगामिनी । ज० प्र० ३० । अन्यत्र नयन तेन निर्हारिम । बृ० तृ० ३० आ ।

निहिय-निहित न्यस्तम् । उत्त० ३४८ । निहितं-स्थापितम् । आव० ६४७ ।
निहिसरिनाम-निधिभिः सदृक्-सदृक्ष नाम येषाम् । ठाणा० ४५० ।
निही-निधि- सत्तादिप्रमाणद्रव्यस्थापनम् । भग० २०० ।
निहु-वनस्पतिजीवविशेषः । आचा० ५७ ।
निहुअ-निभृत अन्तःकरणाशुभव्यापारविन्तनपरित्यागात् । आव० १५४ । निभृतः-स्थिरः । उत्त० ४७७, ४६५ ।
निहुअप्पा-निभृतात्मा – असंभ्रान्तः रचिताञ्जलिः । (?) १६१ ।
निहुआ-निभृता-निर्व्यापाराः । बृ० तृ० २७ अ ।
निहुय-निभृत-स्तिमितम् । प्रश्न० १३६ ।
निहुया-स्निहुः स्निहुपुष्पं थोहरपुष्पं अनन्तकायिकम् । प्रज्ञा० ७७ । निभृता-निर्व्यापारा । बृ० प्र० ६१ आ ।
निहुवणट्ठिया-निधुवनस्थिता । आव० ४२१ ।
निहूय-निर्व्यापारं । उत्त० मा० ७१ । (देशी) अकिञ्चित्करार्थं । विशे० १०४३ । (देशी) अकिञ्चनकरार्थं । आव० ३२५ ।
निहे-गोपयेत् । आचा० १८० ।
निहेलुयं-निहित न्यस्त च । उत्त० १३० ।
निहोडणं-निहेठितम् । व्य० प्र० २२३ आ ।
निहोडणा-निवारणम् । व्य० प्र० २४३ आ ।
निहोडिहिति-निवारयिष्यति । बृ० प्र० ११६ अ ।
निहोडेइ-निहेठयति-वारयति । बृ० प्र० ६१ अ ।
नीअ-नीचं सम्यगवनतोत्तमाङ्गः । लघुतरम् । दश० २५० । नीच-नम्रकायः । दश० २५० ।
नीआं-नीचां गतिम् । दश० २५० ।
नीइ-नीतिः-हक्काराादिलक्षणा सामाद्युपायलक्षणा वा । आव० १२६ । नीतिः-नयनं परिच्छेद इत्यर्थः । दश० १६ ।
नीइकोविए-नीतिकोविदः-न्यायाभिज्ञः । उत्त० ४८३ ।
नीई-नीतिः-क्रमरूपादिसमाणा । उत्त० १४४ ।
नीणासो-धारणम् । नि० चू० द्वि० ३१ आ ।
नीणित-निष्काशयन्ति । आव० २१७ ।
नीणियं-आनीतम् । आव० ३७२, ७०१ । चतुरिन्द्रियजन्तुविशेषः । जीवा० ३२ ।
नीणिया-चतुरिन्द्रियजीवविशेषः । जीवा० ३२ ।
नीणेइ-निष्काशयति । औप० ६४ ।
नीतिः-बल प्रमाण च । आव० ४६३ ।
नीतिपथं-नीतिमार्गः । नंदी० १६४ ।
नीतिशास्त्र-धर्माधिकरणिकम् । व्य० प्र० २०१ अ ।
नीती-नीतिः सामादिका । प्रश्न० ७६ ।
नीमं-नीमफलम् । दश० १८५ ।
नीय-नीचं-अनुद्धतम् । उत्त० ३४६ । नीचं-अनात्यर्थम् । भग० १६४ । अपूज्यम् । भग० १६४ ।
नीयजुद्धं-नीचयुद्धम् । आव० ६८ ।
नीयपिंड-नियतपिण्ड.-मयैतावद्दातव्यं भवता तु नित्यमेव ग्राह्यमित्येवं नियततया यो गृह्यते स । ठाणा० ५१५ ।
नीयल्लुया-निजका-आत्मीयाः स्वजनाः । बृ० तृ० २४३ अ ।
नीयागोए-यदुदयवशात् पुनर्ज्ञानादिसम्पन्नोऽपि निन्दां लभते हीनजात्यादिसम्भवं च तद् नीचैर्गोत्रम् । प्रज्ञा० ४७५ ।
नीयावासविहारो-नित्यवासेन विहारः नित्यावासकल्पः । आव० ५३५ ।
नीयावित्ती-नीचं-अनुद्धत यथा भवत्येवं नीचेषु वा शय्यादिषु वर्तत इत्येवं शीलो नीचवर्ती, गुरुषु न्यग्वृत्तिमान् । उत्त० ३४६ । नीचैर्वृत्तिः कायमनोवाग्भिरनुत्सिकः । उत्त० ६५६ ।
नीरए-नीरजः निर्गतरजः कल्पसूत्रमतरवालापः । भग० २७७ । निर्गतरजः-कल्पसूत्रमतवालाग्रोऽपहृत्याग्यरजः कोष्ठागारवत् । अनु० १८० । स च तद्भूमियतरजसामध्यभावे नीरजाः । भग० ९७६ । निरजाः-बध्यमानकर्माभावात् । प्रज्ञा० ६१० ।
नीरओ-नीरजाः-सकलकर्मरजोविनिर्मुक्तः । दश० १२१ ।
नीरय-नीरजा-निर्मलः । व्य० प्र० २१० अ । नीरजः स्वाभाविकरजोरहितत्वात् । प्रज्ञा० ८७ । नीरजाः-बध्यमान कर्मरहितः नीरयो निर्गतरेणुत्वयः । औप० ११४ । नीरजांसि आगन्तुकरजोविरहात् । सम० १४० । नीरजस्कः-अष्टविधकर्म विप्रमुक्तः । दश० ११६ ।
नीरया-नीरजसः रजोरहितत्वात् । ठाणा० २३२ ।
नीरसं-विगतरसम् । प्रश्न० १६३ ।

नीराजितो–निर्विटित लब्धजय पारप्राप्तो वा । बृ० तृ० ८४ आ । निर्वटित । व्य० प्र० २०३ अ ।
नीरुह–साधारणबादरवनस्पतिकायविशेष । प्रज्ञा० ३४ ।
नीरोगा–व्यक्ता । ओघ० ७१ ।
नीरोहो–प्रतीक्षा प्रतीक्षाप्यते । बृ० तृ० १४७ आ ।
नीर्विशेत्–परिहारतप प्रतिपद्येत । व्य० प्र० १८१ आ ।
नील–मरकतमणि । जीवा० २७४ । औप० ४१ । हरितत्वमतिक्रान्त कृष्णत्वमसप्राप्त पत्र नीलम् । जीवा० १८६ । वर्षधरपर्वतविशेष । ठाणा० ६८ । अष्टाशीतौ महाग्रहे पञ्चविंशतितमः । ज० प्र० ५३५ । नीलवर्षधरपर्वते द्वितीय कूटः । ठाणा० ७२ ।
नीलकठ–महिषानिकाधिपतिदेवविशेष । ठाणा० ३०२ ।
नीलकणवीरय–नीलकणवीर वृक्षविशेष । प्रज्ञा० ३६२ ।
नीलकेसो–नालकेशी–तरुणी । व्य० द्वि ११ अ ।
नीलगुडिया–नीलगुटिका–नील्या गुटिका । जीवा० १६४ । प्रज्ञा० ६१ ।
नीलगुहा–मुनिसुव्रतस्वामिनो दीक्षास्थानम् । आव० १३७ ।
नीलपटा– । सूत्र० २८० ।
नीलपत्ता–चतुरिन्द्रियजन्तुविशेष । जीवा० ३२ ।
नीलबधुजीव–नीलबन्धुजीव वृक्षविशेष । प्रज्ञा० ३६० ।
नीलवत–नीलवान् पर्वतविशेषः । आव० ६८५ ।
नीलवतद्रह–ह्रदविशेष । ठाणा० ३२६ ।
नीलवन्त –वर्षधरपर्वतविशेष । ठाणा० ७० । ज्ञाता० २४२
नीलवान्–वर्षधरपर्वतविशेष । प्रश्न० ९६ ।
नीला–हरित सस्यम् । ओघ० १२६ । नदीविशेष । ठाणा० ४७७ । आचा० ३६१ ।
नीलाभास–नीलावभास –अष्टाशीतौ षड्विंशतितमोमहाग्रह । ज० प्र० ५३५ ।
नीलासोए–सौगन्धिकायां नगर्यां उद्यानम् । विपा० ९२ । ज्ञाता० १०४ । नीलाशोक वृक्षविशेष । प्रज्ञा० ३६० ।
नीली–नीलवर्णपरिणत । प्रज्ञा० १० । नदी० १७० । गुलिका । ज्ञाता० २२२ ।
नीलीगुलिया–नीलीगुलिका नीलीगुटिका । ज० प्र० ३३ ।
नीलीया–आर्द्रा वनस्पतय । आचा० ३६१ ।
नीलुप्पल–नीलोत्पल कुवलयम् । प्रज्ञा० ३६० ।
नील्या–नीलमया । प्रज्ञा० ६१ ।
नीवारं–व्रीहि–विशेषकणदानम् । सूत्र० ८७ । आचा० २८५ ।
नीव्र–उपरि । ओघ० १६२ ।
नीव्वोदग–नीव्रोदक–गृहपटलान्तोत्तीर्णजलम्, वर्षासु गृहाच्छाद्यनप्रान्तगलित जल नीव्रोदकम् । पिण्ड० १५ । नदी० १६३ । निव्रोदकम् । ओघ० १३२ ।
नीसढु–निस्सन्द । ओघ० १०० ।
नीसदा–प्रनाहा । पव० ।
नासट्ठं–अत्यर्थं । बृ० तृ० १६६ अ । विनष्ट विध्वस्त । आव० ७०६ ।
नीसरण–निस्सरण नाम फेलहस्तण । व्य० द्वि० ६ आ ।
नीसवओ–निश्रावक –निर्जरक । विशे० १०६३ ।
नीससति–नि श्वसन्ति–बाह्यक्रियां कुर्वन्ति । प्रज्ञा० २२६ ।
नीससिऊससियसम–नि श्वसितोच्छ्वसितमानमनतिक्रामतो यद्गेय तन्नि श्वसितोच्छ्वसितसमम् । ठाणा० ३६४ ।
नीससिय–निःश्वसित–अध श्वसितम् । आव० ७७६ । नि श्वसन नि श्वसितम् । विशे० २७४ ।
नीसा–पेषणी । दश० १७२ ।
नीसापट्टए–शिलापेषणी । बृ० द्वि० ६० अ ।
नीसास–सङ्ख्यया आवलिका निश्वासो–बहिर्मुखपवन । ज० प्र० ९० ।
नीसासविसा–नि श्वासे विष येषां ते निश्वासविषा । प्रज्ञा० ४६ ।
नीसेस–नि श्रेयस कल्याणकरत्वात् । सम० १२७ ।
नीसेसा–नि शेष समग्रम् । भग० १५१ ।
नीहड– । आचा० ३२५ ।
नीहडिया–निहृतिका–नीयमान सागारिकद्रव्य यद् यत्र नीयते सा । बृ० द्वि० १६८ अ ।
नीहम्मिए–निर्गते । बृ० प्र० २२१ आ ।
नीहरइ–निहरति । ओघ० २१३ ।
नीहरण– । भग० ६८२ ।
नीहरित्तए–निहर्त्तु निष्कासयितुम् । भग० २१८ । विपा०

८१ ।
नीहरिय–निष्क्राम्य । नि० चू० प्र० २७१ आ ।
नीहार–पुरीषोत्सर्गः । आव० ५४१ ।
नीहारि–गिरिकन्दरादिगमनेन ग्रामाद्बहिर्गमन तद् विद्यते यत्र तन्निर्हारि । उत्त० ६०३ । निर्हारि–घोषवान् शब्दो घण्टादिशब्दवत् पिण्डेन निसृत । ठाणा ४७१ ।
नीहारिम–निर्हारेण निर्वृत्त यत्तत् निर्हारिम निर्यारित–निश्रितम् । भग० १२० । निर्हारिमा दूर विनिर्गच्छन्ती । राज० ७ । निर्हारिम दूर निर्यायी । प्रश्न० १६२ ।
नीहारिमा–निर्हारिमा दूरे विनिर्गच्छन्ती । जीवा० १८८ ।
नीहारी–निर्हारिम ग्रामादिनामन्त । व्य० द्वि० ४३० अ । निर्हरण निर्हार गिरिकन्दरादिगमनेन ग्रामादेर्बहिर्गमनम् । उत्त० ६०३ ।
नु'–वितर्के । उत्त० २८२ । आव० ५०८ । उत्त० ११४ । क्षेपे । दश० ८५ ।
नुपूर–भूषणविशेष । ठाणा० ६३ ।
नूम–कर्म माया वा । आचा० २१५ । प्रच्छादनम् अधमद्वारस्य द्वाविंशतितम नाम । प्रश्न० २६ । नुम–अवतमसम् । भग० ९२ ।
नूमगिह–नूमगृह–भूमीगृहम् । आचा० ३८२ ।
नूमानि–निम्नानि–गर्तादीनि । आचा० ३८२ ।
नृत्य–विविधाङ्गहारादिस्वरूप । उत्त० ३८६ ।
नृपतिहठप्रवर्त्तितकृत्य–राजवेष्टि । उत्त० ५५३ ।
नेउणिय–नैपुणिक नाम वस्तु । विशे० ११७ । नैपुणिकम् । आव० ११६ ।
नेउर–नूपुर–पादाभरणम् । प्रश्न० १५६ । आव० २२५ । नुपुर–मञ्जीरम् । पिण्ड० ६८ ।
नेउरहारिगा–नूपुर–मञ्जीर तस्य हारो हरण श्वशुरकृत तेन या प्रसिद्धा सा नूपुरहारिका आगमे चान्यत्रनूपुर–पण्डितेति प्रसिद्धा । नूपुरहारिका–उत्थितचतुष्चरणहस्ति–वत् अनाचारप्रवृत्तौ साधुत्वानवस्थानम् । पिण्ड० ६८ ।
नेउरा–चतुरिन्द्रियजन्तुविशेष । जीवा० ३२ । प्रज्ञा० ४२ । द्विन्द्रियजीवविशेष । जीवा० ३१ ।
नेगम–प्रभूततरवणिग्वर्गावास । आचा० २८५ । नैके गमा वस्तुपरिच्छेदा यस्य अपि तु बहव स निरुक्त वशात् ककारलोपतो नैगम । अनु० २२३ । नैकैर्मा–नैर्महासत्तासामान्यविशेषविशेषप्रज्ञानैर्मिमीते मिनोति वा नैकम निगमेषु वा–अर्थबोधेषु कुशलो भवो वा नैगम, अथवा नैके गमा पन्थानो यस्य स नैकगम । ठाणा० ३९० । निगम । आव० ८११ । निगम–पदार्थपरिच्छेद । आव० २८३ । न एक नैक प्रभूता–नीत्यर्थं, नैकैर्मानैर्महासत्तासामान्यविशेषादिज्ञानै–र्मिमीते मिनोति वा वस्तूनि परिच्छिनत्तीति नैगम । अनु० २६४ । नैगम–अनेकप्रकारवस्त्वभ्युपगमपर । विशे० ६४८ । नेलको–रूपक । नि० चू० प्र० १३६ आ । बहुवस्तुपरिच्छेद सामान्यविशेषादिप्रकारैर्बहुरूप–वस्त्वभ्युपगमपर । अनु० १७ । निगमा–वणिजस्तेषा स्थान नैगमम् । आचा० ३२६ ।
नेच्छइया–निश्चयेन–तत्त्वेनार्थान् व्याख्याना ये व्यवहरन्ति ते नैश्चयिका । व्य० द्वि० १७ अ ।
नेच्छइओ–नैश्चयिक । आव० ४१८ ।
नेच्छइओ–नैश्चयिको–निश्चयचरित । विशे० १६६ ।
नेच्छिय–इच्छाया विषयो कृत नेच्छितम् । जीवा० २७९ ।
नेड्डवालगो–गृहपालक । आव० ४०२ ।
नेति–नयति गमयति । सूर्य० ३३ । प्र० २८ ।
नेत्त–नेत्र–मथिदण्डाकर्षणरज्जु तद्दीर्घतया तनेत्र चेक उच्यते । उपा० २२ ।
नेत्तपड–नेत्रपट । प्रज्ञा० ३०६ ।
नेपथ्य–आभरणम् । ज० प्र० ६४ ।
नेपथ्यकथा–नेपथ्यानां प्रशसन द्वेषण वा स्त्रीकथाया–श्चतुर्थो भेद । आव० ५८१ ।
नेपालवत्तिणी–नेपालदेश । आव० ६६७ ।
नेपालविसय–नेपालविषय । आव० ६६६ ।
नेम–नेम भूमिभागादूर्ध्वं निष्क्रामत् प्रदेश । जीवा० ३५६ । नेम –भूमिकदूर्ध्वं निष्क्रामत्, प्रदेश । जीवा० १६८ । नि नेमे त नेम–प्रदर्शनम् । नि० चू० द्वि० ६३ आ । चिह्नम् । आव० ७६७ । मूलम् । प्रश्न० ६१ ।
नेमा–स्तम्भाना मूलपादा । भग० १४५ ।
नेमि–नेमि–तद्योगा चक्रमपि चक्रधारा । भग० ६४५ ।

नेमिः-चक्रमण्डलमाला । भग० ३२२ । चक्रमण्डलधारा । भग० ४८१ । गण्डमाला । ज्ञाता० ५८ ।
नेमित्त-नैमित्तिकः । आव० ३९३ । नैमित्तिकम् । आव० २७८ ।
नेमी-नेमिः-द्वाविंशतितमो जिनः । आव० ५०६ । नेमि-भूमिका । राज० २८ ।
नेम्माणि-मूलपादाः । बृ० तृ० २३ अ ।
नेय-णाइणा पहेण नयति तम्हा नेयो । दश० चू० १४५ अ ।
नेयइया-नैलिककर नीलिकारिणः । व्य० प्र० १६६ अ ।
नेयव्वो-नेतव्य.-अध्येतव्यः । भग० २८३ ।
नेयाउए-नायकं मोक्षगमकमित्यर्थः । भग० ४७१ ।
नेयाउयं-नयनशीलो, नेता-सम्यग्दर्शनज्ञानचारित्रात्मको मोक्षमार्गः श्रुतचारित्ररूपो वा धर्मः । सूत्र० १७१ । नयनशील नैयायिकं-मोक्षगमकम् । ज्ञाता० ११ । आव० ७६० ।
नेयारं-पहु-सामि । आव० ६६१ ।
नेरइए-नैरयिकः-भगवत्याः प्रथमशतके सप्तम उद्देशकः । भग० ६ ।
नेरइय-निर्गतं अयं-इष्टफलं कर्म यस्मात् स निरयः, तत्र भवः नैरयिकः-नारकः । भग० १६ । निरया-नरका-वासास्तेषु भवा नैरयिकाः । प्रज्ञा० ४३ ।
नेरइयउद्देसए-जीवाभिगमस्य द्वितीय उद्देशकः । भग० ६०६, ६३८ ।
नेरइयउद्देसओ-जीवाभिगमस्य द्वितीय उद्देशकः । भग० ६१६ ।
नेरइया-निर्गतं-अविद्यमानमयं-इष्टफलं कर्म येभ्यस्ते निरयास्तेषु भवा नैरयिकाः-क्लिष्टसत्त्वविशेषाः । ठाणा० २८ ।
नेरई-नैर्ऋतिः-दक्षिणपश्चिममध्यवर्त्तिदिक् । आव० २१५ । ठाणा० १३३ ।
नेल-नैलं-नीलीविकारः । भग० १० ।
नेल्लकः-सुराविशेषः । जीवा० २६५ ।
नेवत्थं-नेपथ्यम् । आव० १४५ । आचा० ४२३ । नेपथ्यं-स्त्रीपुरुषाणां वेषः स्वाभाविको विभूषाप्रत्ययश्च । ठाणा० २११ । वेषः । जीवा० २०७ ।
नेवत्थकहा-नेपथ्यकथा-नेपथ्यसंबंधेन स्त्रीणां कथा । प्रश्न० १३६ ।
नेवाइयं-निपतत्यर्हदादिपदादिपर्यन्तेष्विति निपातः, निपातादागतं तेन वा निर्वृत्तं स एव वा स्वार्थिकप्रत्ययविधानात् नैपातिकम् पदस्य द्वितीयो भेदः । आव० ३७६ । अव्ययपदानामादौ निपातनाद् नैपातिकम् । विशे० ११४८ ।
नेसज्जिए-निषद्या-पुताभ्यां भूमावुपवेशनम् । भग० ९२४ । कनकादि । आव० ८८ ।
नेसत्थिया-निसर्जनं निसृष्टं, क्षेपणमित्यर्थः तत्र भवा तदेववा नैसृष्टिकी निसृजतो यः कर्मबन्धः । ठाणा० ४२ । यन्त्रादिना जीवाजीवान् निसृजतः । ठाणा० ३१७ । नैसृष्टिकी-विंशतिक्रियामध्ये दशम् । आव० ६१२ ।
नेसाए-निषादः निषीदन्ति स्वरा यस्मिन् सः स्वरविशेषः । अनु० १२७ ।
नेह-स्नेहः तैलादिरूपः । जीवा० २६६ ।
नेहलं-स्नेहलं स्निग्धम् । जीवा० २६६ ।
नेहुर-नेहुरः-विलातदेशवासी म्लेच्छविशेषः । प्रश्न० १४ ।
नैगमः-निगमाभिहिताः शब्दा अर्थास्तत्परिज्ञानं च देशसमग्रग्राही । सू० १३५ । प्रज्ञा० ५६ ।
नैगमेषी-इन्द्रस्यैतदभिधानो देवः । ज० प्र० ३६७ ।
नैपातिकं-निपातेषु पठितत्वाद् । खल्विति । अनु० ११३ ।
नैपुणिके- । ठाणा० ४१२ ।
नैरयिकानुपूर्वी-अनुपूर्व्याः प्रथमो भेदः । प्रज्ञा० ४७३ ।
नैरुक्तं-निश्चितार्थवचनभवम् । अनु० १५१ ।
नैरुक्तिः-शब्दव्युत्पत्तिः । पिण्ड० १२१ ।
नैषेधिकी-निसीहिया-शवपरिष्ठापनभूमिः । बृ० तृ० १४१ आ ।
नैषेधिकीसप्तकः-आचाराङ्गस्य द्वितीयश्रुतस्कन्धे द्वितीयचूडायां द्वितीयमध्ययनम् । ठाणा० ३८७ ।
नैष्ठिकमुनिः-परमसाधुः । प्रश्न० ११४ ।
नैसर्गिकं-दर्शनभेदः । आव० ५२७ ।
नैसर्पादयः-चक्रवर्तिसम्बन्धिनो नवनिधयः । सम० ११२ ।
नो-प्रतिषेधे । उत्त० ४०२ । साहचर्ये । प्रज्ञा० ४६६ ।

नो शब्दस्य मिश्रवचनत्वात् । ठाणा० १०३ । इति मन्यमाना नोशब्दो देशप्रतिषेधे । आचा० २५० । नोसद्दो मिस्सभावम्मि-नोशब्दश्चात्र मिश्रवचन । विशे० ३६ । नो इह सर्वनिषेधवचन । विशे० ३२ । नोशब्दो देशनिषेध वचनविवक्ष्यते । विशे० ३३ ।

**नोइंदिओवउत्ते**-यदा समेवार्थमिन्द्रियेण दृष्ट्वा विचारय-त्योघसञ्ज्ञयापि तदा स नोइन्द्रियोपयुक्त । प्रज्ञा० १५६ ।

**नोइंदिय**-नोइन्द्रिय-मन । ठाणा० ३५६ । प्रज्ञा० ३११ । उत्त० ४०२ ।

**नोइंदियअत्थावग्गहो**-नोइन्द्रियेण भावमनसाऽर्थावग्रहो-द्रव्येन्द्रियव्यापारनिरपेक्षघटाद्यर्थस्वरूपपरिभावनाभिमुख प्रथममेकसामयिको रूपाद्यर्थाकारादिविशेषचिन्ताविक-लोऽनिर्देश्यसामान्यमात्रचिन्तात्मको बोधो नोइन्द्रियार्था वग्रह । प्रज्ञा० ३११ ।

**नोइंदियगिज्झ**-नोइन्द्रियग्राह्य नो-न इन्द्रियै -श्रोत्रादि भिर्ग्राह्य -सवेद्य । नोइन्द्रियेण-मनसा ग्राह्यो वा । उत्त० ४०२ । इन्द्रियग्राह्य, नो इति प्रतिषेधे, इन्द्रियै -श्रोत्रा-दिभिर्ग्राह्य -सवेद्य । इन्द्रियाग्राह्य । उत्त० ४०१ ।

**नोइंदियत्थ**-औदारिकादिरर्थपरिच्छेदकत्वलक्षणधर्मद्वयो-पेतमिन्द्रिय तस्यौदारिकादित्वधर्मलक्षणदेशनिषेधात् मन , साहचर्याद्वा नोशब्दस्यार्थ परिच्छेदकत्वेनेन्द्रियाणा सदृशमिति तत्सहचरमिति वा नोइन्द्रिय-मनस्तस्यार्थो विषयो-जीवादि नोइन्द्रियार्थ इति । ठाणा० ३५६ ।

**नोइन्द्रियदुष्प्रणिहितकायिकी**-नोइन्द्रियेण-मनसा दुष्प्र-णिहितस्याशुभसङ्कल्पद्वारेण दुर्व्यवस्थितस्य क्रिया, दुष्प्रणिहितकायिकीक्रियाया द्वितीयो भेद । आव० ६११ ।

**नोइन्द्रियसयम**-कषायादीना निग्रह । विशे० ५०२ ।

**नोउवसत**-नोपशान्त-अनिष्टादिव्याख्यातमेवैकार्थं वा । भग० ६० ।

**नो एव भवइ**-नैतद्भवति-नैतत्कल्पते । आचा० २४४ ।

**नो कम्म**-वेदितस्य कर्म नो कर्म । भग० ३०२ ।

**नो कर्म द्रव्यकर्म**-लेप्यकर्मादिकम् । उत्त० ६४० ।

**नोकर्मद्रव्यकषाय** -बिभीतकादय । आचा० ९१ ।

**नोकर्मद्रव्यलोभ** -आकारमुक्ति, चिक्कणिका । आव० ३६७ ।

**नोकर्मभावक्षणः**-आलस्यमोहवर्णवाद । आचा० ११० ।

**नोकषायता**-कषायसहचारिता । प्रज्ञा० ४६९ ।

**नोकसाय**-कषाय क्रोधादिभि सहचरा नोकषाया । ठाणा० ४६९ ।

**नोछक्कसमज्जिया**-नोषट्क-षट्काभाव ते चकादय पञ्चान्तास्तेन नोषट्केन एकाद्युत्पादेन ये समर्जितास्ते । भग० ७९७ ।

**नोजीवा**-गृहकोकिलच्छिन्नपुच्छादय । आव० ३१९ ।

**नोजुग**-नोयुग-नोशब्दो देशनिषेधवचन किञ्चिदून युगम् । सूय २०६ ।

**नोट्टु**-णिहु । नि० चू० तृ० ८ (?) ।

**नोतह**-अन्यस्तु नो तथैवान्यथापीत्यर्थो नोतथ । ठाणा० २१४ ।

**नोदसणायार**-नोदर्शनाचार -चारित्रादि । ठाणा० ६५ ।

**नोपरीत्त**-नोअपरीत्त -सिद्धः । जीवा० ४४६ ।

**नोभव**-भवव्यतिरिक्त कर्मसम्पर्कसम्पाद्यनैरयिकत्वादि-पर्यायरहित । प्रज्ञा० ३२८ ।

**नोभवसिद्धिकानोअभवसिद्धिक**-सिद्ध । जीवा० ४४ ।

**नोमालियापुड**-गन्धद्रव्यविशेष । ज्ञाता० २३२ ।

**नोल्लेऊणं**-नोदयितु -उल्लघयितुम् । बृ०द्वि० २०६, २७६ ।

**नोशब्दा**-देशवचन । व्य० प्र० ४ अ । सर्वनिषेध एव । ठाणा० १०३ । साहचर्यार्थे । ठाणा० ४६९ ।

**नोसञ्ज्ञोपयुक्त**-आहाराद्युपभोगेऽपि तदनभिसक्त । भग० ९०५ ।

**नोसद्दो**-नोशब्दो मिश्रभावे मिश्रवचनोऽपि । विशे० ४२१ ।

**नोसन्ना**-नोसंज्ञा । भग० ९०५ ।

**नोसन्नोवउत्ता**-नोसञ्ज्ञोपयुक्ता आहारादिषु गृद्धिवर्जिता । भग० ९३० । पुलाक निर्ग्रन्थस्नातका नोसञ्ज्ञोपयुक्ता । भग० ९०५ ।

**नोसुयग**-नोमृताङ्ग-अमृताङ्गम् । उत्त० १४४ ।

**नोहव्वाए नोपाराए**-यो हि मध्ये महानदीपूर निमग्नो भवत्यसौ नारातीय तीराय नापि पारे महानदी पूरम् । आचा० ११३ ।

**न्यक्कार** -तिरस्कार । उत्त० ३७६ ।

न्यक्कृत–धिक्कृतः । आचा० १८२ ।
न्यक्षं–विस्तारः प्रत्यक्षं च । उत्त० ६६ । आव० ८४२ । निष्कृष्टम् । आव० २१६ ।
न्यग्रोधः–वटवृक्षः । भग० ६५० ।
न्यग्रोधपरिमण्डलं–न्यग्रोधवत् परिमण्डलं यस्य तत्, यथा न्यग्रोध उपरि सम्पूर्णप्रमाणोऽधस्तु हीनः तथा यत्संस्थानं नाभेरुपरि सम्पूर्णप्रमाणं अधस्तु न तथा तन्न्यग्रोधपरिमण्डलम् । प्रज्ञा० ४१२ ।
न्यग्रोधसंस्थानं–नाभित उपरि सर्वावयवाश्चतुरस्रा–लक्षणाऽविसंवादिनोऽधस्तु तदनुरूपं यत्र भवति तत् । सम० १५० ।
न्यायोद्ग्रहण–शब्दान्तरापेक्षया विशेषः । ठाणा० ४६४ ।
न्यासः–निक्षेपः, स्थापना । ठाणा० ४ ।

## प

पंक–महान् कर्दमः पङ्कः । प्रश्न० ६५ । पङ्कः । ओघ० ८६ । पङ्कः–स्वेदार्द्रमलरूपः । व्य०व० १२२ (?) । पङ्कः–कलरूपः । पिण्ड० १०२ । पङ्कः–कर्दमः । ठाणा० ३२८ । पङ्कः–पापम् । पङ्कं–पङ्कयतीति पापम् । सूत्र० ३३१ । पङ्कः–मलः एव स्वेदेनार्द्रीभूतमलः । भग० ३७ । पङ्कः–कर्दमः । भग० ३०७ । जं० प्र० १६६ । प्रस्वेद उल्लि । नि० चू० प्र० ११० अ ।
पंकगति–पङ्के–उदके वाऽतिदुस्तरं यद्गमनीय केनापि सहोद्धृत्य तद्बलेन गच्छति सा पङ्कगति, विहायोगतेः षोडशमोभेदः । प्रज्ञा० ३२७ ।
पंकजल–पङ्कजलं–पङ्कप्रधानं जलं यत् कमलमुच्यते । उत्त० ३६१ ।
पंकप्पभा–पङ्कप्रभा–चतुर्थनारकपृथ्वी । प्रज्ञा० ४३ । पङ्कस्य प्रभा यस्या सा । पङ्काभद्रव्योपलक्षिता वा । अनु० ८६ ।
पंकबहुल–पङ्कबहुलं–कर्दमबहुलो विशेषो भूभागः । रत्नप्रभाया, द्वितीयकाण्डः । जीवा० ८६ ।
पंकभोस– । नि चू० द्वि ७६ अ ।
पंकायायणाभि–पङ्कायतना–यत्र पङ्कोलदेशे लोका धर्मार्थं लोटनादिक्रियां कुर्वन्ति । आचा० ४११ ।
पंकावई–पङ्कावतीनाम महाविदेहे कुण्डः । जं० प्र० ३४६ । पङ्कोऽतिशयेनास्त्यस्यामिति पङ्कावती । महाविदेहे नदी । जं० प्र० ३४६ ।
पंकावती– । ठाणा० ८० ।
पंकिता–जल्लमल्लेन ग्रस्ता । नि० चू० प्र० १०८ आ ।
पंकिय–आर्द्रमलोपेतम् । भग० २५४ ।
पंखाल–पक्षवतीः । बृ० प्र० १८ आ ।
पंगु–गन्तुमसमर्थः, पदे जङ्घाहीनः पङ्गुः । नि० चू० द्वि० ४३ आ ।
पंगुल–पङ्गुलः–गमनासमर्थजङ्घः । प्रश्न० २५ । पङ्गुलः–चङ्क्रमणासमर्थः । प्रश्न० १६१ ।
पंचंगुलि–पञ्चाङ्गुली । जीवा० २२७ । वल्लीविशेषः । प्रज्ञा० ३२ ।
पंच–पञ्चय । नि० चू० प्र० ४४ अ ।
पंचकुल– । सूर्य० २८२ ।
पंचजण्णं–पाञ्चजन्याभिधानं सङ्खम् । ज्ञाता० २१८ ।
पंचट्ठी–पञ्चाष्टा–पञ्चमुष्टिः । अन्त० ४८२ ।
पंचतव–पञ्चतपः–पञ्चाग्नितपः, यत्र चतुर्ष्वपि दिक्षु चत्वारोऽग्नयः पञ्चमश्च तपनस्तल्लोके प्रसिद्धम् । उत्त० ५१८ ।
पंचनियम–पञ्चनियमास्तु–शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि । ज्ञाता० १०५ ।
पंचपुल–पञ्चपुलः । विपा० ८१ ।
पंचमंगल–पञ्चमंगलं–नमस्कारम् । आव० ४५४ ।
पंचमंगलयं–पञ्चमङ्गलकं–नमस्कारम् । ओघ० २०३ ।
पंचम–पञ्चानां षड्जादिपञ्चस्वराणां निर्देशक्रमभाविनः पूरणः पञ्चमः स्वरविशेषः । पञ्चसु–नाभ्यादिस्थानेषु मातीति वा पञ्चमः स्वरः । अनु० १२७ ।
पंचमासिआ–पञ्चमी भिक्षुप्रतिमा । सम० २१ ।
पंचमासिए– । आचा० ३२७ ।
पंचमी–पञ्चमभिक्षुप्रतिमा । ज्ञाता० ७२ ।
पंचमुट्ठियं– . । ज्ञाता ६० ।
पंचरूविता–पञ्चानां रूपाणां गर्जितविद्युज्जलवाताभ्रलक्षणानां समाहारः पञ्चरूपं तदस्ति येषां ते पञ्चरूपिका उदकगर्भाः । ठाणा० २८७ ।

पचलइअ–पञ्चलतिकाः कत्तलिकारूपा अवयवा । जं० प्र० २२३ ।
पचवण्णा–चतुर्दशतीपकृतशिबिका । सम० १५१ ।
पचसेल–द्वीपविशेष । नि० चू० प्र० ३४५ अ । नि० चू० द्वि० ४२ आ । कुमारनदीगमनस्थानम् । बृ० तृ० १०८ आ । पञ्चशैलक द्वीपविशेष । आव० २९९ ।
पचसोगंधिय–पञ्चभि –एलालवङ्गकर्पूरकक्कोलजातीफल लक्षैः सुगन्धिभिर्द्रव्यैरभिसंस्कृत पञ्चसौगन्धिक । उपा० ५ ।
पचहत्थुत्तर–श्रमणस्य भगवतो महावीरस्य जन्मादिकल्याण सूचक नक्षत्रम् । आचा० ४२० ।
पंचाल–दर्भेभवासत्थो देश पञ्चाल, द्रव्यव्युत्सर्गे देश । आव० ७१६ । पञ्चाल –देशविशेष । आव० २१६ । पञ्चमण्डल–पञ्चालदेश । उत्त० ३९० । कम्पिलपुर० नगरस्य जनपद । ज्ञाता० २०७ । जितशत्रुजनपद । ज्ञाता० १४४ । पञ्चालजनपदनिवासिन । नंदी० १०४ । आर्यदेशेषु नवम पाञ्चाल जनपदविशेष । प्रज्ञा० ५५ । पञ्चाल० । आव० २१९ ।
पंचालराया–पाञ्चालराज । आव० ७१९ ।
पंचासवपरिण्णाया–'पञ्चाश्रवा'–हिंसादय परिज्ञाता– द्विविधया परिज्ञया–ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च परि० समन्तात् ज्ञाता यैस्ते पञ्चाश्रवपरिज्ञाता, आहिताग्न्या० देराकृतिगणत्वात् निष्ठाया पूर्वनिपात इति समासो युक्त एव परिज्ञात पञ्चाश्रवा इति वा । दश० ११९ ।
पंजर–पञ्जर–वंशादिमयाच्छादनम् । राज० ६६ । पञ्जर– वंशादिमयप्रच्छादनविशेष । प्रश्न० ९६ । पञ्जर –पञ्जरा कार । जं० प्र० २४२ । पञ्जर –वंशादिमयप्रच्छादन० विशेष । सम० १३६ । पञ्जर –बन्धनविशेष । उत्त० ४६० । पञ्जर –वंशादिमयप्रच्छादनविशेष । सूर्य० २६४ । आचार्यादिपारतन्त्र्य परस्पर प्रति नोदना च । बृ० तृ० ८ अ । आयरिलो उवज्झातो पवत्ति थेरो गणावच्छेतितो एतेहिं पचहिं परिग्गहितो गच्छो पजरो भण्णति । नि० चू० तृ० ९५ अ ।
पजरदोष अधपरसाहिविज्ञरयुक्तात् । भग० ५४८ ।
पजरभाग–मुट्ठुवम्मेण पडिचोदेति सुट्टं अच्छामि सो । नि० चू० तृ० ९४ अ ।
पंजलिउडे–प्रकृष्ट –प्रधानो ललाटतटघटितत्वेन अञ्जलि– हस्तन्यासविशेष कृतो येन स प्राञ्जलिकृत । राज० ४४ । प्रकृष्ट भावान्वितत्वाऽञ्जलिपुटमस्येति प्राञ्जलि० पुट । उत्त० ५६ । प्रकर्षेण–अन्त प्रीत्यात्मकेन कृतो विहितोऽञ्जलि –उभयकरमीलनात्मकोऽनेनेति प्रकृताञ्जलि । प्रकृष्ट वा–भावान्विततयाऽञ्जलिपुटमस्येति प्राञ्जलि० पुट । उत्त० ६३ । आव० २६९ ।
पंजलीगडे–प्रकर्षेण–अन्तप्रीत्यात्मकेन कृतो–विहितोऽञ्ज० लि –उभयकरमीलनात्मकोऽनेनेति प्रकृताञ्जलि । उत्त० ५६ ।
पंजलियडे–प्रकृष्ट –प्रधानो ललाटतटघटितत्वेन अञ्जलि – हस्तन्यासविशेष कृतो विहितो येन स प्राञ्जलिकृत । सूर्य० ६ ।
पंजली–प्रकृताञ्जलि –प्रकृष्टतोषवती । ज्ञाता० १६६ ।
पंड–जनपदविशेष । भग० ६८८ ।
पंडए–पण्डक–नपुंसकम् । ठाणा० १६४ ।
पंडग–पण्डक –नपुंसकम् । ठाणा० ४४५ । पण्डते–गच्छति जिनजन्माभिषेकस्थानत्वेन सर्ववनेभ्यतिशायितामिति पण्डकम् । जं० प्र० ३६३ । पण्डक –नपुंसक । दश० २१५ ।
पंडगवण–पाण्डकवनम् । आव० १२४ । वनविशेष । ठाणा० ८० । पण्डकवन, पण्डते–गच्छति जिनजन्माभिषेक स्थानत्वेन सर्ववनेभ्यतिशायितामिति णक प्रत्यय–पण्डक वनम् मेरोर्वनम् । जं० प्र० ३५९ ।
पंडरंग–पाण्डुरङ्ग मतविशेष । आव० ८५६ । नि० चू० प्र० १४८ अ ।
पंडरकडु–पाण्डुरकडय –धवलगृहम् । आव० ६७१ ।
पंडरकुडुगा–पाण्डुरकुडय प्रसिद्धा गोपाला । आव० ४१८ ।
पंडरगाईण–। आचा० ४२१ ( ? ) ।
पंडरज्जा–पाण्ड्वा मायोदाहरणे दृष्टान्त । आव० ३९३ । नि० चू० प्र० ३५१ अ ।
पंडरट्ठिअगाम–पाण्डुरास्थिकग्राम । आव० ११० ।
पंडरा–पाण्डुरा । आव० ४१७ ।

